# श्रीवत्सचरितम् ।

## मङ्गलाचरणम् ।

निःसङ्गे पुरुषेऽप्यहो प्रसवजं कष्टं विना या स्वयं
  विश्वं स्थावरजङ्गमात्मकमिदं गर्भाहृते सूयते ।
मातुङ्गाद्रिपयोधरप्रसृतया या तत्* पयोधारया
  नित्यं रक्षति, सा† महाद्भुतकृतिः पायादपायाच्च वः ॥

कविदोग्धृभिरन्वहं यथेच्छं
  परिदुग्धापि न या तथैव भाति ।
जयतात् ननु सा हि सूक्तिधेनुः‡
  रुचिरा गोः सुचिरं विशुद्धवर्णा ॥

विधिकृते भजने स्वयमाकुलं
  जनमभिप्रतियात्यमलं नु कः ?
कविकृते तु यदा विलपत्यसौ§
  उपसरत्यमुमेव जनो¶ मुदा ॥

विलपति श्वसिति स्वयमाकुल-
  स्त्यजति बाष्पजलं सहते व्यथाम् ।
तदपि सोऽनुभवत्यतिमात्रकं
  सुखमहो कविकर्म विलक्षणम् ॥

---

* तत् विश्वम् ।   † सा साद्भुताकृतिः प्रकृतिः ।
‡ सूक्तिरूपस्य दुग्धस्य धेनुः ।   § असौ कविकृतेऽजनो जनः ।
¶ जनः श्रोतृवर्गः ।

कविस्मृते ननु दुःखनिदानतः
समनुभावयितुं वद कः क्षमः ।
सुखमतो विधिशक्तिजयी कवि-
श्चिरमयं जयतात् जगतीतले ॥

—

## प्रथमः सर्गः।

आसीत् पुरा शेषनरेशमौलि-
रत्नांशुभी रञ्जितपादपद्मः।
श्रीवत्स इत्यद्भुतपुण्यकीर्त्तिः
प्राग्देशराजः सुगृहीतनामा ॥ १ ।

यः सौख्यसुप्तां वसुधां समग्रा-
मयान्तमेकेन भुजेन बिभ्रत् ।
शेषं जहासेव शिरःसहस्रै-
र्गुरुश्रमैस्तां दधतं सकम्पाम्* ॥ २ ।

अहो नगादीन् धरतीति पृथ्व्या
यो विस्मयः प्रागुदपादि लोके ।
अपाकरोत् वीतकरस्तमेक-
करार्पितक्षोणिरसौ नृपालः† ॥ २ ।

शरण्यमासन्नमनन्यरक्षो
विपन्न एनं व्यसने सखेति ।

---

* यः श्रीवत्सः सौख्यसुप्तां निरुपद्रवामित्यर्थः समग्राम् सकलां वसुधां धराम् एकेन भुजेन हस्तेन अयान्तं लीलया बिभ्रत् धारयन् गुरुश्रमैः परिश्रान्तैः शिरःसहस्रैः फणासहस्रैः सकम्पां (भूमिकम्पसहिताम्) तां धरां दधतं धारयन्तं शेषम् अनन्तदेवम् जहासेव उपहसितवानिव इत्यर्थः।

† अहो नगादीन् असह्यान् पर्वतादीन् धरति बिभर्त्ति इति इत्येवंरूपः यः विस्मयः [illegible] राजकरमुक्तः इत्यर्थः एककरार्पितक्षोणिः एकहस्तधृतभूभारः असौ नृपालः श्रीवत्सः तं विस्मयम् अपाकरोत् निरस्तवान्, पृथिव्यपेक्षया अस्य धारणमतिरिक्ता इति भावः।

ष्वोरसु शिष्यासु विशेषदक्षं
  पितेति मेनेऽपितृकः प्रजासु* ॥ ४ ।

प्रमर्थिभावात् पुरुषाः प्रपन्ना:
  वदान्यमन्यं नहि जातु याताः।
परोपभोगाय महान्ति यस्मात्
  ददौ फलानि द्रुमलीलयासौ† ॥ ५ ।

दिक्षात कश्चित् प्रणयी‡ न तस्या-
  सूना§, च्युतिः स्वस्तिमतो ततोऽभूत्।
सा प्रार्थना चेदभविष्यदेनां
  न जातु दाता व्यहनिष्यदेष: ॥ ६ ।

पूर्णे धनैः कोषगृहे न तावान्
  वदान्यवर्य्यस्य¶ बभूव तोषः।
यावात्पितैस्तै. खलु तत्र रिक्ते
  यावानभूत् चित्तविकारहेतुः ॥ ७ ।

नाभूत् हरस्येव भुजङ्गसङ्ग‖
  स्तस्य चितोमस्य महोदयस्य।

---

* प्रजासु मध्ये धनवत्सु प्रस्थान्तरवत् इत विपदो नाम एव नृप आयत्तस विपन्न शरणम् (रक्षक अवन विपत्पाते कर्तृत्वेन, अपितृक पितृशून्य एव यासु शिष्यासु विशेषदक्ष पितेति मेने।

† यथा द्रुम सार्थपरतामुक्त आपातितोऽपि फलानि ददाति, तथाऽयं यथा कामम् अर्थिभ्य फलानि अर्थान् धनानि ददौ, तेन अर्थिनाम् अन्यवदान्यापगमन निष्प्रयोजनमभूत् इति भावः।

‡ प्रणयी याचक। § असूना प्राणानाम्।

¶ वदान्यवर्य्यस्य श्रेष्ठस्य दातुः। ‖ भुजङ्ग सर्प धातुरागस्य।

किन्त्वेष आसीत् स इव प्रलीन-
 कामः सदा भूतिविभूषितश्च * ॥ ८ ।

द्विजाश्रयो† ऽब्द इवायमासीत्
 पद्मालयोऽभूच्च‡ यथा तडागः ।

तेजोनिधिः§ सूर्य इव प्रकाम
 किन्त्वेष नासीत् करतप्तभूमि ¶ ॥ ९ ।

अजय्यशक्तौ रिपुभिर्जितद्विपि
 क्षितीश्वरे तत्र च शासति क्षितिम् ।

भयं प्रजानां परलोकत|| परम्
 परार्थलाभे च परं विचिन्तनम् ** ॥१० ।

भ्रूषु कौटिल्यमरुन्तुदत्व
 शरेषु, तैक्ष्ण्य तरवारणेषु ।

---

* भूति भस्म सम्पच्च। हर भुजङ्गमङ्गत चाटुकारवर्जित अयं राजा न तथा इत्यस्य हरात् उत्कर्ष, हर सर्पसङ्गत इति समाधानम्, हर प्रलीनकाम भस्मीकृतमदन अयमपि जितकाम, हर भस्मभूषित अयं सम्पत्शोभी इति साम्यम् ।

† द्विज पक्षी ब्राह्मणश्च । ‡ पद्मानाम् कमलानाम्, पद्माया लक्ष्म्या ।

§ तेज किरण प्रतापश्च ।

¶ करेण किरणेन राजकरेण च यथा सन्तापिता उत्पीडिता च भूमयेन तादृश ।

|| पर केवल परलोकत स्वर्गादिलोकात् नतु मनुलोकात् ।

** पर केवल परमादलाभे नतु परधनलाभे। मनुलोकात् भयम इति राज्ञो निन्दा, वैरकालात् भयम् इति स्तुति , परस्वलाभार्थे चिन्ता इति निन्दा, परमार्थं साधयम् इति स्तुति ।

सत्येषु निर्बन्धपरायणत्वं
  सन्धासु चासीत् दृढ़ता निकामम्* ॥ ११ ॥

गिरास्समित्राः प्रथमं रणाङ्गने
  व्यनीनमन्नेव ततः शरासनम् ।
जयश्रिया कार्मुकटंकृतिश्रुतेः
  समालिलिङ्गे भुवमेव साध्वसात्† ॥ १२ ॥

विपक्षनारीवदनारविन्द-
  चन्द्रोदयो यो बहुलेऽपि पक्षे‡ ।
मित्रोदयो§ मित्रविलासिनीनां
  निरस्तनिःशेषतमस्ततिर्यः ¶ ॥ १३ ॥

"एकातपत्रं जगतः प्रभुत्वं"
  काष्ठान्तिमा|| लौकिकसम्पदां हि ।
आशा**, नृपो लब्धुमचेष्टतासौ
  अध्यात्ममुत्कर्षं समभ्यचेष्टः†† ॥ १४ ॥

---

* यस्य शासनकाले लोकानां धनुषि ननु मनांसि कुटिलता, अरंगु नतु वचनेषु मर्मोद्घाटिता, खड्गेषु ननु लोककार्ये तीक्ष्णता, समरक्षणे ननु दुष्प्राप्य साधने अभिनिविष्टात्मता, प्रतिज्ञायां ननु दुराभिप्राये दृढता आसीत् ।

† जयलक्ष्मीः भीतात् धनुष्टङ्कारश्रवणादेव रणाङ्गने भूतलमेव एतम् आलिङ्गितवती, तेन धनुर्नमनात् प्रागेव शत्रवः शिरः नतं चक्रुः अर्थात् शरणं ययुः ।

‡ बहुले कृष्णपक्षेऽपि यः कथं चन्द्रः । § मित्रोदयः सूर्योदयः ।

¶ निरस्ता निःशेषा तमसस्ततिः अन्धकारराशिः दुःखराशिश्च येन तादृशः ।

|| काष्ठान्तिमा...

** आशा वा वाञ्छा आशा तादृशी ।

†† अध्यात्ममुत्कर्षं—आत्मविषयिणीं श्लाघाम् ।

पत्नी हि धर्म्माचरणे प्रधानं
सहाय* इत्येव जितेन्द्रियोऽसौ ।
काञ्चित् ग्रहीतुं यतते स्म राजा
स्वेष्टैर्गुणैस्तैः† समलङ्कृता ताम्‡ ॥ १५ ।
अस्तोन्मुखे संहृतरश्मिजाले
रवौ, प्रवाति श्वसने च मन्दम् ।
विहर्त्तुकामः प्रविवेश रम्य-
मुद्यानमेको जितनन्दन § सः ॥ १६ ।
सुगन्धिभिस्तत्र विचित्रपुष्पैः
रम्येऽतिसेव्ये परितो भ्रमन्तम् ।
वर्षीयसी काचिदुपेत्य नारी
ह्यारौति ¶ वाक्यं तमुवाच नम्रा ॥१७ ।
अस्त्यत्र कश्चित् सुगृहीतनामा
"राजा प्रजारञ्जनलब्धवर्णः" ।
विचित्रवीर्य्यः खलु चित्रसेनो
नामाभिरामः स्फुरयोयकीर्त्तिः ॥ १८ ।
चिन्तेति चिन्तामणिनापि ॥ देव !
सुदुर्लभालोकिकसौकुमार्य्या ।

कन्यास्ति धन्या ननु तस्य कन्या-
ललामभूता ललनागुणौघैः* ॥ १९ ॥

तस्या विधातुः किल मुख्यसृष्टेः
अवेहि राजन्नुपमातरं माम्।
यदर्थमद्यास्मि समागताहम्
अभ्यर्थये तच्छ्रवणावधानम् ॥ २० ॥

दिने दिने तद्वपुरीक्षमाणा
प्रत्यौचलावण्यमचिन्त्यहेतु।
चिन्तामगाम्, तामवदं कुमारीं
जिज्ञासमाना विकृतेर्निदानम् ॥ २१ ॥

सखीजनप्रार्थनया विना ते
क्रियासु वत्से! न कथं प्रवृत्तिः?
यतस्त्वदो मौक्तिकवच्च शुक्तेः
दृष्टेः कथं वारिरतं जलं ते† ॥ २२

मया परीक्ष्य निपुणं निरीक्ष्य
सत्त्वात् च्युतं ते हृदयं न्यबोधि।
निगूहक‡ मा चित्तविकारहेतुं
प्रसीद वत्से! वद पुत्रि! सर्वम् ॥२३॥

---

* सत्यामृषत्व पृथक्कर्षापरत्व परतन्त्रानिस्पृहत्वादयो ललनागुणाः।

† यथा शुक्तिकोषात् (झिनुक) निस्तृतमौक्तिकानि पतन्ति, तथा तव दृष्टे अश्रुण कथं वाष्पबिन्दव पतन्ति।

‡ मा निगूह विकारहेतोर्गोपनं मा कुरु।

निर्बन्धपृष्टापि यदा न मे सा
मनोगतं किञ्चिदुवाच बाला।
तदा तदीयां चतुरां वयस्यां
न्ययोजयं तत्त्वनिरूपणार्थम् ॥ २४ ।

दिनेषु गच्छत्सु सखी तदीया
करे नु मे चित्रमिदं समर्प्य ।
जगाद मातर्भवदीयपुत्त्र्याः
निबोध चेतोविकृतेर्निमित्तम् ॥ २५ ।

अहं तदालोक्य विषादमुक्ता
वरेऽनुरूपे बत बद्धभावा * ।
सुतेति हृष्टा, ह्यनुरूपसङ्गे
न कस्य जायेत गुरुः प्रहर्षः ॥ २६ ।

एतच्च तैश्चित्रमिदं गृहाणे-
त्युक्त्वा च धात्री नृपसिंहहस्ते ।
समर्पयामास, समीक्ष्य तत्
विमुक्तबन्धश्च ददर्श राजा ॥ २७ ।

उद्भासित तूलिक्रियात्मरूपं
संवादि सर्व्वावयवेषु हृष्टा ।
किं दृष्टपूर्व्वोऽस्मानया कदाचित् ?
न चित्रमेव हि विना विलोकम् ॥ २८ ।

---

* बद्धभावा अनुरागवती ।

इयञ्च मे दृष्टिपथं गतेति
न स्मर्यते चिन्तयता च कामम्।
इति प्रतर्काकुल एव राजा
यदा परिच्छेदविमूढ़ आसीत्॥ २९।
तदा तया तत्र वयस्यया च
प्रश्नोत्तरं श्लोकमयं निबद्धम्।
अधीत्य तत्पाठनिबन्धनस्य
हर्षस्य काष्ठां परमां प्रपेदे॥ ३०।

प्रश्न।

कस्येयं कृतिनः सखि! प्रतिकृती रम्या प्रकृत्या त्वया
साकाङ्क्षं मुहुरीक्ष्यतेऽसि[*] विलयं यातेव यस्यामहो!

उत्तरम्।

सा पुण्या प्रकृतिः किमस्ति भुवने? यस्याः प्रतिच्छायया[†]
मुग्धे वास्तनयाप्यप्रतिकृतया[‡], तत् पृच्छयालं सखि॥ ३१।

प्रश्न।

विस्रम्भास्पदमालिरस्मि तव, तत् किं लज्जया चेष्टसे
निह्नोतुं हृदयव्यथां सुमहतीं मह्यं[§] न सह्यं हि तत्।

उत्तरम्।

प्राधत्ते नहि यत् श्रुतं नु हृदये संप्रत्ययं शृण्वतां
तत् तद्गुप्तिरलं महार्थाय[¶] महते ज्ञानीहि निःसंशयम्।३२

---

* असि त्वम् (अव्ययमेतत्)।   † प्रतिच्छायया प्रतिकृत्या।

‡ अप्रतिकृतया चित्रकर्मणि नैपुण्याभावात् असम्यक्कृतया।

§ मह्यम् इत्यत्र क्रियायोगे चतुर्थी।

¶ तद्गोपनस्य महते अर्थाय अत्र विषयस्य गोपनम् अतिप्रयोजनाय महत्त्वाय अलं भवति।

"निर्बन्धो यदि ते" "यदीति च पदं मह्यं कथं रोचताम्"
"भद्रं तत् कथयामि" "युज्यत इदं ब्रूयाः" "समाकर्णय" ।
"जाने सुप्तवती गृहं प्रविशतीमद्राक्षमेकां वपु-
र्गन्धामोदितदिङ्मुखां मृदुपदां दिव्याङ्गनां कामपि ॥२३॥
निद्रालोढ़निमीलितेक्षणयुगा धात्री प्रसुप्तैव सा
द्वारं तत् पिहितञ्च, दीपनिवहं कान्त्या तिरस्कुर्वती ।
लीलानीरजपाणिरद्भुतपद मत्पार्श्वमागम्य सा
जाने गात्रमिदं स्पृशत्यविरत हस्तेन मामब्रवीत् ॥२४ ।
वत्से ! मामवगच्छ सिन्धुतनयां विष्णुप्रियामिन्दिरा
श्रीवत्से नृपतौ ममास्ति तनये ! वात्सल्यमैकान्तिकम् ।
विद्वन्मानसराजहंसमतुलोत्कर्षं* पतित्वेन तम्
राजानं वृणु, दम्पती सुखसमायोगौ चिरं नन्दताम् ॥२५।
भूमेरिवासौ च ससागरायाः
करग्रहेणं† प्रसितस्तवापि ।
सव्येतरं ते भनु पार्श्वमागात्
कृतार्थयैनं शुभदृष्टिपातैः ॥ २६ ।
मधुना माधवनो वनीव‡ युक्ता
शशिना सङ्गमिता यथा त्रियामा ।

---

* यथा मानसे सदाख्यसरोवरे हंस क्रीडति तथायं राजा विदुषाम् मानसे सन्त करणे रमते ।

† करस्य तव हस्तस्य राजकरस्य, यथायं पृथिव्या करं गृह्णाति तथा तव करं पाणि गृहीतुम् उत्सुक, करग्रहेण इत्यत्र प्रसितौत्सुकाभ्याम इति वृत्ता ।

‡ माधवनो वनी इन्द्रसम्बन्धिनी उपवाटिका नन्दनकाननमिति यावत ।

मिलिता भूमिस्तताभुना तथा त्वं
भव वत्स! जनताविनोदहेतुः* ॥ ३७ ।
यदा तथोक्ता परिवर्त्त्य वक्त्रं
व्यलोकयं तत् पुरुषाख्यरत्नम् ।
तदा सखीमे† गुरुहर्षवेगात्
नेत्रे विमुक्ते बत निद्रया मे ॥ ३८ ।
तथाज्ज्वलद्दीपमपि प्रबुद्धा
तमोभिराच्छन्नमिवातिघोरैः ।
अदर्शमेतत् सदनं तदानीं
न तां सुरेशीं न च तं नरेशम् ॥ ३९ ।
क्षणेन मे चित्तमसौ ग्रहोत्था
प्रादुद्रुवत् क्वापि, गतिं न वेद्मि।
कियच्चिरं दग्धमिदं शरीरं
चेतोविहीनं बत धारयामि" ॥ ४० ।
"आश्चर्य्यमेतद्धि परः परस्य
यच्चोरयत्यङ्ग! मनो निरङ्कम् ।
अन्यत्र सक्तो न कदाचिदेवं
वादीर्वचो मा सखि! वारयामि ॥" ४१ ।
"वक्त्रं चोरितचन्द्रकान्ति, नयने चौरौ चकोरश्रियः
पाणिः संहृतपद्मशोभिरधरयोः प्रवालद्युतेः ।
अङ्गं यस्य परस्वचौर्य्यचतुरं सर्व्वं, स मे यन्मनोऽ
मुष्णात् तत्र किमस्ति चित्रमधुना मूढे! विबुद्धं त्वया"॥

---

* जनसमूहस्य आनन्दकारणम्। † हे सखि इति।

चित्रस्थपद्यानि निविष्टचित्तं
राज्ञो हि भावं पठतो विलोक्य ।
सञ्जातरागोयमिति प्रहृष्टा
धात्री ददौ चित्रमथैकमन्यत् ॥ ४३ ।
उवाच राजानमियं विनम्रा
तस्या हि जैवातृक* ! राजपुत्र्याः ।
जानीहि सम्यक् प्रतिरूपमेतत्
आलानुरूपं यदि यान्यथैतत् ॥
मतिं स्थिरीकृत्य निरीक्ष्य साधु
मनोगतं वाचि निवेशयाशु ।
सन्ध्ये ऽसि संप्राप्तविवाहयोग्य-
दशस्तथाभूतदशा च चिन्ता ॥४४,४५। युग्मकम्।
बाला निकामं त्वयि बद्धभावा
लज्जा निदेशात् गुणगौरवाच ।
घरान्तरे बीतरुचिर्दयार्हा
नवेति तूर्णं वद कातराक्षि ॥ ४६ ।
निराकृतौ मृत्युरसंशयोऽस्याः
सर्व्वं शुभं पाणिपरिग्रहे च ।
यत् सांप्रतं संप्रति तात ! सम्यक्
विचार्य्य कार्य्यं, बहुभिः किमुक्तैः ॥ ४७ ।
इत्युक्तवत्यां नृपवक्त्रपद्मे
संघट्टदृष्ट्यां श्रवणाय तस्याम् ।

---

जैवातृक !—हे वनदेवचन्द्र !

वक्तुं नृपः प्राक्रमतैवमेनां
चिन्तार्थचिन्ताकुलमानसां सः ॥ ४८ ॥

उपैयिवानस्मि विवाहयोग्या
दशा स्वधर्माचरणाय सुभ्रु !
प्रयोजनं मत्समयाभिजात्यैः*
नारीगुणैर्भूषितया च पत्न्या ॥ ४९ ॥

सा चैवमेनो कमलाशुकन्या-
पात्रं तयालौकिकसौकुमार्या ।
तत् ब्रूहि किं तत्, ननु येन सा मे
न काम्यपाणिग्रहणानुरक्ता ॥ ५० ॥

चित्रार्पिता सा मम मानसेऽस्मिन्†
हंसीव मातर्विहरत्यजस्रम् ।
चित्तं समालोकयता ममैना
न तृप्तिमायाति विलोकनस्य‡ ॥ ५१ ॥

प्रकृतिदर्शनमद्य तदर्शना
प्रतिकृतिर्विशतीव नृपेक्षणम् ।
मिपतु शंकरभाव्यवदाविल
मकुरते कुरुतेऽस्य दृगञ्जनम्§ ॥ ५२ ॥

---

* आभिजात्यं—कौलीन्यं ।

† मानसी मानसाख्ये सरोवरे मनसि च ।

‡ विलोकनस्य "दृशायाता वा" इति पाठश्च दृष्टौ, पक्षे दशा ।

§ कविराह प्रकृतदर्शना यद्गुणम् आशय्ये दर्शन रूप प्रतिपादन यथा सा प्रतिकृतिः चित्रात्मा चित्रस्थेयमय दीपवत्सहनैव विशतीव प्रविशतीव महदभाव्यस्त्

कश्चित् कीटः प्रविशति यदा नेत्रमध्यं तदैतत्
कीदृक् कष्टं वद न सहते, नैव यावत् प्रयाति ।
निष्यूतेव* स्थगितदशदिक् लक्ष्यते सा नताङ्गी
दृष्टिश्चैषा तदपि रमते निर्भरानन्दभारा ॥ ५३ ।

मरुस्थल्यां लब्धा सरससलिला रम्यतटिनी,
यथा, रात्रौ मेघावृतदशदिशि प्रोज्ज्वलशिखः ।
यथा दीपस्तीव्रे दिनकरकरैस्तापितपथे
वटच्छाया यद्वत्,भवति च तथैषं मम मुदे† ॥ ५४ ।

इय गेहे लक्ष्मीरिव चरतु मे विग्रहवती
अनिर्वाणः स्निग्धो ज्वलतु नियत दीप इव वा ।
अहोरात्र तुल्यद्युतिरिव निरुद्धा विधुतनुः
सुधाधारां वर्षत्वतनुमविरामं वपुषि मे‡ ॥५५ ।

---

शरदृतुना वेदाभ्यासेनेव अस्य नृपस्य प्रज्ञाविद्यान विषादश्यत् वसुजात वपिद्य जल साफल्यमासाद्य आविल दशनायोग्य प्रयात्नत प्रकुरुते निभृते, इत्याशय अनुप वैभव वस्तुतत्त्व सम्यक् प्रकाशनम् कुरुते निपत्य च हृदे । भवती प्रसन्न इत्यर्थ ।

* निष्यूतेव—तथा कीलितेव नेत्रमध्ये कीलकेन विद्धेव ।

† मरुस्थल्यां लब्धा सरसजला रम्या नदी यथा मुदे अर्थात् आनन्दाय भवति, मेघावृतदशदिशि रात्रौ सहसा लब्धं प्रोज्ज्वलशिखः दीपः यथा आनन्दाय भवति, तीव्रे दिनकरकरैः तापितपथे लब्धा वटवृक्षच्छाया यद्वत् यथा आनन्दाय भवति, तथा लब्धा इयं चिन्ता मम मुदे आनन्दाय भवति ।

‡ इयं चिन्ता मे गेहे विग्रहवती शरीरिणी चिन्तारूपेण अवतीर्णा इयं लक्ष्मीः साक्षात् कमलादेवीव विचरतु वा अथवा अनिर्वाणः निर्वाणशून्यः नियतं ज्वलन् स्निग्धः नेत्रानन्दकरः प्रोज्ज्वलशिखः प्रोज्ज्वलया शिखया अन्वितः दीप इव प्रदीपवत् नियतम् अविरामं ज्वलतु मद्गेहे आलोकं वितरतु, अहोरात्र दिवानिश

चिन्ताचिन्तास्तिमितनयनः फुल्लराजीववक्त्रः
सान्द्रानन्दक्षुभितहृदयः कण्टकाकीर्णकायः ।
एकैवेयं जननि ! जनने मूर्त्तिमानुत्सवोऽस्मिन्
इत्युक्त्वैवागमदनुगतो हृदयासौ निशान्तम् ॥ ५६ ॥

इति श्रीश्रीवत्सचरिते महाकाव्ये चित्तगत-
चिन्तायोगो नाम प्रथमः सर्गः ।

---

गन्धद्युति रात्रौ दिवसे च [illegible] निरुद्धा कण्टकयुक्ता विपुलपारेव चन्द्रमूर्तिरिव इह [illegible] मनसि [illegible] प्रकाशम् सुधाधाराम् [illegible] वदतु वाचयतु ।

# द्वितीयः सर्गः ।

जरातुरायो जननी कदाचित्
प्रदर्शिताध्वा परिचारिकाभिः ।
समेत्य सुखोत्थितमात्मजं स्वं
जगाद तेनार्चितपादपद्मा ॥ १ ।

माता कथं वत्स ! विवाहदीक्षां
न कारयेत् योग्यवयो कुमारे ।
विनिन्दतीत्थं पुरवासिवर्गः
पुरन्ध्रिवर्गश्च समन्ततो माम् ॥ २ ।

लब्धस्य ते पुण्यपरम्पराभि
र्जन्मोत्सवो वत्स ! महासम्भ्रमा ।
सम्भावितो नन्दितजीवलोक
स्नातेन ते पात्रविकीर्णवित्तः ॥ ३ ।

दिधीर्षुमात्मानमवेक्ष्य वत्सं
सक्रान्तविम्बं गृहकुट्टिमेषु ।
विचेष्टमानं विफलप्रयास
लब्धश्च हर्षो हसता प्रकामम्* ॥ ४ ।

---

* तेन ते स्नातेन वत्सं भवन्तं गृहकुट्टिमेषु सक्रान्तबिम्बम् प्रतिफलितच्छायम् आत्मान निजदेहं दिधीर्षुं धारयितुमिच्छुं विचेष्टमानम् विफलप्रयास व्यर्थम् चेष्टयापि धारणे असफलकार्यम् अवेक्ष्य हसता सता प्रकामम् अत्यर्थं हर्ष लब्ध ।

संक्रम्यमाणं सुत ! जानुनाङ्कं*
भवन्तमारोप्य रजोविलिप्तम् ।
आनन्दमोलन्नयनेन सद्मात्
उत्कण्टकाङ्गेन चिरस्य तस्थे† ॥ ५ ॥

गृहीतविद्यस्य समस्तलोकं
प्रह्लादयन्त्या गुणवत्तया ते ।
यत् सौख्यमागाच्च तदा पिता ते
वाग्वृत्तिबोध्यं नहि तत् कथञ्चित् ॥ ६ ॥

सञ्जाततारुण्यविलासरागैः
लोकोत्तरा ते ननु तेन शोभा ।
प्रीत्या च विस्फारितनेत्रयुग्मं
दृष्टा तथा शक्तिरलौकिकी च ॥ ७ ॥

तथाभिषिक्तस्य च यौवराज्ये
शिरः समाघ्रातमनूनशोभम् ।
नमस्यतो दिग्विजयागतस्य
गात्रं परिष्वक्तमिदं प्रगाढम् ॥ ८ ॥

वधूसमेतस्य विशुद्धकान्तेः
विधाय ते तृप्ता स्वपदे प्रतिष्ठाम् ।
यदा वनं गन्तुमियेष तात !
मया समेतो हतभाग्ययासौ ॥

---

* जानुना चङ्क्रम्यमाणं वक्षःस्थलमेषु सञ्चरमाणम् ( হামাগুড়ি দেওয়া ) ।

† तत्र स्थित इति शेषः ।

तदा कृतान्ते सगणे समहं
विलोकयत्स्वेव चतुर्भुजास्ते ।
दैत्यारिदूता ननु विष्णुलोकं
निन्युः समारोप्य विमानमेनम् ॥९,१०॥ युग्मकम्।
अहं जराजुष्टसमग्रधातु-
र्जाता समासन्नशरीरपाता ।
यथाहि वत्स स्नुषया समेतं
दृष्ट्वा म्रिये त्वं नु विधिं विधेहि ॥ ११ ।
समुद्धृतोत्तुङ्गतरङ्गबाहुं
वलिप्रदत्तं कुसुमं वहन्तीम् ।
इरावतीं दक्षिणसिन्धुसङ्गात्
सुतां यदेषे कुटिलं चलन्तीम् ॥
तदैवमेवं गततो मनोरथैः
नयामि कालं सुत ! मे स्नुषा कदा ।
इयं नदीमाल्यमिताश्रयागता
गृहीतमाल्या पतिपार्श्वमेष्यति ॥१२,१३॥ युग्मकम्।
न भाति मार्गप्रसृतं यथा वपु-
र्विभूषितं स्वविभूषणैरपि ।
तथैव शून्यं समयेन ते गृहं
न रम्यमाकल्पगतेर्हि शोभितम्* ॥ १४ ।
अमीतदैश्वर्यसुखं सुतेन ते
विनानुरेमे विरमायतेऽधुना ।

---

* पाठान्तरे—[illegible]

यथैतदर्थं स्वादयतां नवं घृते
रसानुभूतिर्विद कीदृशी भवेत् ॥ १५ ॥
सुवासितं तैरपि तैश्च साधनैः
सुगन्धि ताम्बूलमचूर्णचर्वितम् ।
अजातरागं रसनेन्द्रियाय किं
कदापि किञ्चित् स्वदते च पुत्रक ॥ १६ ॥

तदेव दुःखं ह्यनपत्यताश्रयं
वयःप्रकर्षेण समं प्रकाश्यते ।
क्रमात् भराक्रान्तमिदञ्च मानसं
प्रकम्पते क्राम्यति चावसीदति ॥ १७ ॥

प्रजामि वैराग्यकृतेपि चेतसो
निवृत्तसुखस्य विषयोपभोगतः ।
यदा तदारोहति मत्स्मृतिं तदा
वियोर्यतोवाहमहो नु दुःसहम् ॥ १८ ॥

मया विना का नियतं सुधाम्बुधौ
वसन्त्यपि क्राम्यति तृष्णया भृशम् ।
तुषारसंघातशिलाशयापि का
कुकूलराशाविव पच्यतेऽनिशम् ॥ १९ ॥

उपान्तसंमीलितलोचनाम्बुजं
विचुम्ब्यमानः स्खलदक्षरं वदन्
प्रसारिताभ्यां जनकेन सादरं
प्रवेष्टकाभ्यामभिनन्दितागमः ;

क्षणं तदङ्कापतने कृतोद्यमः
निवृत्य मातुर्धृतकम्बरः क्षणम्
प्रलोभ्यवस्तुप्रणयी पुनः करं
प्रसारयन् तद्ग्रहणे हृताग्रहः ;
विवर्त्तितग्रीवमपूर्णवासनो
विलोकयन् मातृमुखं चलेक्षणः
तया हृतः सस्मितमोदितः क्षणात्
नतोर्द्धकायस्ततबाहुयुग्मकः ;
प्रसृतपादा जननीभुजान्तरं
शशीव पूर्वाद्रिशिरः परित्यजन्
तमो नुदन् वक्षसि पुण्यशालिनः
सुतः प्रहृष्टो नभसीव धावति* ॥२०-२३॥ कलापकम् ।

---

* यथा शशी प्रसृतपादः विसृतकरः तमो नुदन् अन्धकारं नाशयन् पूर्वाद्रिशिरः उदयाचलशिखरं त्यजन् विमुञ्चन् नभसि आकाशे धावति तद्वत् प्रचलति, तथा सुतः पुत्रः प्रसृतपादः चालितचरणः जननीभुजान्तरं मातुः बाहुस्थलं त्यजन् तमः दुःखं नुदन् निरस्यन् पुण्यशालिनः पितुः वक्षसि धावति सम्मुखम् आयाति (कुत्रभूत. सन् १) [illegible] यथा [illegible] पिता [illegible], (पुन १) [illegible] वदन्, (पुन १ जनकेन प्रसारिताभ्यां प्रेमपूर्णाभ्यां बाहुभ्यां सादरं अभिमान्यमानः. मत्क्रोडम् एहि इति सदयं आह्वानादधावत्, (पुनः कथंभूत. १) क्षणं तदङ्कापतने कृतोद्यमः, (पुन.१) क्षणं निवृत्य मातृ. धृतकम्बरः, (पुन १. प्रलोभ्यवस्तुप्रणयी पित्रा दीयमानं प्रलोभ्यवस्तु गृहीतुमिच्छन् करं प्रसारयन्, (पुन १) तद्ग्रहणे हृताग्रहः पित्रा अपसारितेऽवस्तुनि विफलप्रयासः, (पुन १) अपूर्णवासनः अपूर्णकामः अतएव चञ्चलचक्षुः विवर्त्तितग्रीवं मातृमुखं विलोकयन्, (पुन १) तया मात्रा हृतः भेदसङ्केतेन सस्मितं मोदितः अङ्कं गच्छ इति सहासं प्रेरितः, (पुन. १) नतोर्द्धकायः नमीकृतपूर्वकायः ततबाहुयुग्मकः प्रसारितबाहुद्वयः ।

हताप्यशेषैः परितो जनैरियम्
वधूकृते मे न पुरी विराजते ।
ध्रुवादिनक्षत्रसमाकुलाप्यसा-
निशा विना चन्द्रिकया तमस्विनी ॥ २४ ॥

किमित्यकाण्डे ननु वत्स ! सन्ततो
सञ्जातविद्वेष इवासि* लक्ष्यसे ?
कथं नु पाणिग्रहणे न सम्मतिं
ददासि ? किं ते वद हृत्तमात्मज ! २५ ।

यदोत्तरं न प्रतिपद्यसे कथं
विवाहदीक्षामधिकृत्य मन्त्रिभिः
कृतासु पृच्छासु ? कथं तवेदृश
गरीयसा क्रमशः प्रकुप्यते ? २६ ।

त्वदेकपुत्रा च जरातुराम्यहं
कथं नवामप्यसमोषमे क्षणम् ।
इमा त्वदाकाङ्क्षितचित्तवृत्ति
भजन्ति द्रुतं प्रसमीक्ष्य मन्त्रिणः ॥ २७

इति ब्रुवत्या मृदु मातरि क्रिया
विनम्रवक्त्रे च सुते निरुत्तरम् ।
नृपस्य धात्री जरती पुरोधसा
तदैव चित्रं समुपानयत् द्रुतम् ॥ २८ ।

ततः परं मन्त्रिवराः प्रहृष्टाः
समागतास्तत्र, गृहीतपूजा-

---

* वर्ष—पत्र ।

निषेदुरर्हे परिवर्हरम्ये
वेत्रासने स्वजनोपनीते ॥ २९ ।
सम्बोध्य धात्री नृपमातरं तत्
चित्तं प्रसार्य्यारभताभिधातुम् ।
अस्त्यत्र कश्चित् किल चित्रसेन-
नामा नृपः श्रुतविशालवंशः ॥ ३० ।
तस्यात्मजेयं, प्रतिरूपमेतत्
यस्याः समाकर्षति पश्य नेत्रम् ।
*ससृजं प्रतिरूपेण प्ररोतुमेनां*
स्वप्ने समादिक्षत सिन्धुकन्या ॥ ३१ ।
पुत्रोऽयमस्यामिति बद्धभावः
तदेतयोर्योग्यसमागमाय
यतध्वमस्यासमयातिपात-
*यमः मनसाद्दयमेव तस्याः ॥ ३२ ।
तस्या निगद्येति निवृत्तवाचि
धात्र्यां पुरोधःप्रमुखाश्च सर्व्वे ।
'आयास्य एष ह्यनुरूपसङ्गः'
इत्येकवाक्यं मुदिता विवव्रुः ॥ ३३ ।
लग्ने विशुद्धे च तिथौ शुभायां
तयोर्द्वयोः काङ्क्षित एव योगः ।
उत्कण्टकः स्वेदजलप्रसिक्तः
सम्पन्न आसीत् परया समृद्ध्या ॥ ३४ ।

---

*। असमयपातयमम्—कालक्षेपमसहित्वा मन इत्यस विशेषणम् ।

रूपानुरूपां न पतिश्च पत्नीं
प्राप्नोति मेने हि वधूर्नवोढ़ा ।
विरूपमेकान्तमभव्यमीशं
पत्नी गतेत्येव परोप्यमंस्त ॥ २५ ॥

विभूषयत्येव वरो यथा वधूम्
अलङ्करोत्येव तथा वधूर्वरम् ।
परस्परालङ्करणात् तदा समाम्
अमंस्त तां भूषणभूष्यतां जनः ॥ २६ ॥

हरमिव गिरिकन्या सिन्धुपुत्रीव विष्णुं
मधुमिव वनभूमिर्वारिदं चञ्चलेव ।
शशधरमिव चित्रा रोहिणी वा सुकेशी
नृपतिमिममुपेता राजते राजबाला ॥ २७ ॥

इति समगुणयोगप्रीतिमासाद्य पौरे-
ष्वनुदिशमुपयातेष्वेवमेवं वदत्सु ।
बहुविधबहुमूल्यैर्वर्द्धितयौतदायैः*
नृपतिरगमदन्तः कान्तया चिन्तया च ॥ २८ ॥

इति श्री जीवन्धरचरिते महाकाव्ये चिन्तापरिणयो
नाम द्वितीयः सर्गः ।

---

* लाभाचे दशीर्देने ।

## तृतीयः सर्गः ।

लोध्रदण्डहतिभिः सुरञ्जितं
वक्त्रकाननमिवाधरं क्षितौ ।
अन्विरावतिः*वियालमद्भुतं
छन्नितं कुसुमकाननं बभौ ॥ १ ॥

यत्र दर्शकमनोऽनुरञ्जिनो
निर्मितौ रुचिरलौकिकौ शुचिः ।
आनुकूल्यमभजत् परस्परम्
तादृशञ्च नरशिल्पकौशलम् ॥ २ ॥

यत्र कापि हतितस्विनी लता
श्यामला कुसुमचारुहासिनी ।
आगते नमति यत्र मारुते
धीरमुन्नतशिरा गते पुनः ॥ ३ ॥

उत्पतत्पतदलिव्रजा परा
वायुकम्पितमनोज्ञपल्लवा ।
दीव्यतीव स्मितिकान्तिकन्दुकैः
सस्मितं स्मिपति पुष्पजालके ॥ ४ ॥

चित्रचारुकुसुमैश्चितासिता
धारयत्युपवनश्रियोऽपरा ।

---

* इरावती नाम न्द्याहोरे ।

मतुसमचमियतो विजल्मती-
त्युपरीपवगतोऽसिमुन्नकः।
यायुनेरितदलच्छलादिमां
तर्ज्जयन्निव विनोक्यते चणमृः॥ ९।

यूथिका च नितरामपत्रपा
भृङ्गगुम्फितमिषेण ततृचणम्।
मौनमारभत एव, किं कदा
सज्जति गधिकयेदृशी विधौ॥ १०।

भूकुटीं प्रचलभृङ्गरूपिणीं
कुर्व्वती कुलभयापरा लता।
वारयतीव भुजवल्लिवेष्टितां
मल्लिकां विशदमन्दहासिनीम्॥ ११।

नमागतानैः प्रतिबिध्यमान-
रविप्रभेणो रुचिरावलोकः
उत्कन्धरं श्यामतया मयूरैः
विलोक्यमानो धनगर्व्वदृप्तैः;
मर्म्मस्य तापस्य महानिवारि
विनीदनश्यामसिपाधिटेव्याः

नैसर्गिकोऽयत्र सुखप्रवेशः
क्वचिन्निकुञ्जः प्रतिभाति मञ्जुः ॥१२,१३॥ युग्मकम्

अथ न ते दृष्टिपथं प्रयातः
नूनं नु वासन्ति* ! शुभे ! गुणज्ञे !
तेनैव तस्यां खलु दण्डकायाम्
अद्यापि वासव्यसनित्वमेषि ॥ १४ ॥

समानगोत्रैः संस्तृणे समन्तात्
सकण्टकच्छा निविडैश्च शाखैः
नानाविधैः स्निग्धमनोज्ञपर्णैः
सुसेव्यतीरा फलपुष्पवृन्दैः ,
तीर्थैर्मनोज्ञैः† सुकरावगाहा
रम्या सपद्मामलजीवनाढ्या‡
राज्ञीव काचित् सुलभाम्बुतर्द्धिः §
यत्रास्ति चैका रमणीयवापी ॥ १५,१६ ॥ युग्मकम् ।

अनुत्तरङ्गे मुकुराच्छतोये
विभाति यस्यां प्रतिबिम्बमाला ।
जानीमहेऽधःशिरसो द्रुमास्ते
जलं प्रविष्टा परिमातुकामाः ॥ १७ ॥

---

* दण्डकारण्यस्य अधिष्ठात्री देवीति भवभूतिः ।

† तीर्थैः—सोपानैः सुखविनिगाहाय ।

‡ अपरत्र अमलजीवनाय सपरेखा सपङ्कीका च, निर्मलजलमा अकलङ्क चारवा वा ।

§ सुलभाम्बुतर्द्धिः—सुलभजला सुलभसम्पच्च ।

कठोरनादेन मरालराजो
  वित्रासयन् कच्छचरीं वलाकाम् ।
वितत्य पक्षौ नतकण्ठनाल:
  पतत्यसौ द्राक् सलिले सशब्दम् ॥ १८ ।
तत्पातसञ्जाततरङ्गरेखा
  विशृङ्खलान्दोलितबिम्बपङ्क्ति: ।
अकाण्डविक्षोभहतेन धत्ते
  तुलां कवेश्चित्तपटेन वापी ॥ १९ ।
कलं सशब्दोच्छलदच्छवारि:
  उत्सस्य यस्मिन् कतकस्य नादम् ।
उत्कर्णमाकर्ण्य कुरङ्गशावो
  बध्नाति शष्पप्रणये* न चित्तम् ॥ २० ।
क्वचित् शयाना करटेन देहात्
  व्याकृष्टकीटा सुखमीलिताक्षी ।
उपस्तकाकं परिभिन्नगात्रं
  लुठत्यसौ पश्य मृगी धरण्याम् ॥ २१ ।
सर्पाकृतिं मारुतनर्त्तमानम्
  उशीरभेदं क्वचिदीक्षमाण: ।
भुजङ्गखेदं कृतघातयत्नो
  श्रान्तस्तो भासते नीलकण्ठ:† ॥ २२ ।
स्वयं सुरुचेव शरीरवल्ल्या
  निर्दिष्टनिर्माणदिशोपदेश: ।

---

* शष्पप्रणये घासभक्षणायाम् नवपत्रे इत्यर्थ । † नीलकण्ठ – मयूर. ।

अन्यत्र मेरोरिव वैजयन्तः
सहस्रनेत्रैश्चितकारुकार्यः* ;
सुकारुकार्यैः परिबृंहितश्रीः
प्रमाणशुद्ध्या रुचिरावलोकः
महोज्ज्वलो दीपितदिग्विभागो
मूर्तो यशोराशिरिवास्य भर्तुः ;
विमानजैर्भूषणवस्तुजातै-
र्विशोभमानो नयनाभिरामैः
सर्वैकहेतुः स्थपतेश्च तत्र
प्रासाद एको नितरां विभाति ॥२२-२५॥ विशेषकम्।

अस्त्र,शोभां सुलभकुतुका द्रष्टुकामेव यान्ती
सन्ध्या यस्य प्रतिहतगतिः काचबद्धे गवाक्षे ।
विद्युद्दामस्फुरणरुचिरा बालिका प्रस्खलन्ती
धृत्वार्केण प्रविततकरेणाङ्कमारोप्यते द्राक्† ॥२६॥

---

* वैजयन्त—इन्द्रप्रासाद सहस्रनेत्रैश्चितकारुकार्यः—यथा वैजयन्त सहस्रनेत्रेण इन्द्रेण ईक्षित कारुकार्य यस्य तादृश तथायं श्रीवत्सप्रासाद सहस्रैर्नेत्रैः ईक्षितम् कारुकार्य यस्य तादृश ।

† सुलभकुतुका विद्युत्सात जातकौतुका अतएव अस्त्र शोभाद् अस्त अभ्यन्तरम्, गृहाभ्यन्तरस्य शोभां सौन्दर्यं द्रष्टुकामेव अवलोकयितु जातश्रद्धेव अतएव यान्ती तदुद्देशार्थं धावन्ती यस्य प्रासादस्य काचबद्धे काचेन आवृते गवाक्षे वातायने प्रतिहतगति वारितप्रवेशा विद्युद्दामस्फुरणरुचिरा विद्युद्दामस्फुरणवत् रुचिरा मनोज्ञा प्रस्खलन्ती स्खलितपदा पतनोन्मुखी बालिका अल्पवयस्कासमा सन्ध्या (उषाराग) प्रविततकरेण विस्तारितकिरणेन विस्तारितहस्तेन च अर्केण सूर्येण पित्रा च द्राक् झटिति धृत्वा गृहीत्वा अङ्कम् क्रोडम् आरोप्यते नीयते । यस्य गवाक्षस्य काचे उषाराग प्रातःकालेन विचित्रा प्रभाम् उत्पाद्य अथ विद्युत्

अथैकदासावभिषेककाले
  रोध्रोल्लताच्छन्नतया सुशीते ।
विहर्तुकामः सरसीजलेऽगात्
  श्रीवत्सराजो वनितासहायः ॥ २७ ॥

क्रमेण सोपानपथावतारात्
  प्रिज्ञानभूषा सुकवेर्यथा वाक् ।
चिन्ता पदक्षेपमनोरमा ताम्
  उत्त्रस्तहंसां सरसीं चकार ॥ २८ ॥

जले विमग्न्या च तया सहावम्
  अभ्युक्ष्यमाणः करमुक्ततोयैः
करी करिण्येव रराज भूपः
  आनन्दसन्दोहनिमीलिताक्षः ॥ २९ ॥

नृपेण तुङ्गैः सलिलैश्च चिन्ता
  विताड़िताक्षी परिवर्त्य वक्त्रम् ।
क्षणं रराजाम्बुदवारिधारा-
  हतावभुग्नाम्बुजपद्मिनीव ॥ ३० ॥

चिन्ता गुरुश्रोणिपयोधरत्वात्
  आत्मानमुद्वोढुमशक्नुवाना ।
पतीपयया सा क्षणमप्सु बाला-
  प्रतला तस्मात् प्रवनात् निवृत्ता ॥ ३१ ॥

---

सुरध्वनत् विवसति पश्चात् सूर्यो समयोदिते च राम. निवर्तते यदि मकराथे । यथा काचित् बालिका पिच्छले पथि स्खलितपदा पदपाठी पितादिना झटिति समीप आ प्रथम गृहीता कोऽपि भवेत् तथा पूर्वमप्यपि चकेव दृश्यं ।

प्रसारयन् सन्तरणे पटुत्वात्
सङ्कोचयन् बाहुयुगं स राजा।
वारत्रयं संप्लवमान एव
ततार वापीं मुखराब्जजालिम्॥ २२।

मुदा तदुत्पीड़ितवारिवृन्दं
प्रसर्पदङ्गाय तटं समाप्नत्।
पत्युः चिते! पश्य विचेष्टितं किम्
इतीव तस्यै गदितुं प्रहृत्तम्॥ २३।

उन्मज्जदारात् वदनं प्रियायाः
प्रियं समालोक्य विमय्यमानात्।
अम्भोनिधेस्तं विधुमुत्तरन्तं
सस्मार हृष्टामृतधारमुग्धम्॥* २४।

कोकिलैरथ रुवद्भिरञ्जसा
स्वागतोक्तमिव प्रमोदितैः
वायुनेव चलता च वीजितं
पादपैरिव सुमैः† कृतार्चनम्;
सौरभभ्रमितभृङ्गजालकं
ज्योतिरारुणितसर्व्वकाननम्

---

* प्रिय प्राप्त श्रीवत्स धारात् तयाख्ये उन्मज्जन स नलात् ... प्रियायाः स्मिताया हृष्टाम्रतधारमुग्ध दृष्टा स लता अमृतधारा यस्मात् तत् अतएव मुग्ध मनोज्ञं वदनं मुखं विलोक्य विस्मयमानात् सुराहुदे क्रियमाणमज्जनात् अम्भोनिधे सागरात् उत्तरन्तम् उत्तिष्ठन्तं हृष्टामृतधारसुग्ध हृष्टयः गलन्त्या अमृत धारया सुधाधारया मुग्ध मनोहरं तं विधु चन्द्रं सस्मार स्मृतवान्।

† सुमै कुसुमैः।

प्रादुरास सहसा तिरोदधत्
तिग्मगौरकरमात्मतेजसा* ॥ २५,२६ । युग्मकम् ।

कर्णासकैरञ्जनकपोलभागं
सस्वेदलेखं निपतत् नभस्तः
उद्भासयत् काननमंशुजालैः
पूर्णं विधोर्बिम्बमिवातिदूरात् ;

प्रोद्योदयात् तत्परमेव सम्यक्
विलोलनेत्रं विचलद्द्विरेफम्
सनालमम्भोजमिवातिरम्यं
वातेन मुक्तं किल मानसोत्थम् ;

अतुल्यविव्वोकसुखं दधानां
सम्यग्विभक्तावयवेति नारीम्
निमेषशून्येति सुराङ्गनां वा
पाषाणवद्भसेति हरिप्रियां ताम् ;

उत्कन्धरः स्तम्भितवत् मुहूर्त्तं
निस्पन्दनेत्रो जलमग्नदेहः

---

* अद्य अखला सहसा दधौः यत्र कुमारः, प्रमोदतः, कौतुके मानसीकृतमिव, अखला वायुना वीजितमिव, पादपे, सुमैः पुष्पैः कातिशयनामव, सौरभभरित-भृङ्गजालकं सौरभेण वायनयेन मामतम उद्भासितोऽस्य अङ्गजालम अतिप्राकेन ताडयन, अर्द्धविलसत्र्यम्बकाननम् अदर्शितम अदृष्टपूर्वीस्य. रुद्धं काननं येन तत् ताडयम आत्मतेजसा स्वकान्त्या तिग्मगौरकर अपरत् सूर्यबिम्बं तिरोदधत आच्छादयत् ज्योतिः किमपि तेन सहसा अतर्कितं प्रादुरास दृष्टिगोचरता गतम्।

ददर्श पश्चात् द्रुतमुत्थितः सन्
स्थितामभूमिस्पृशमेत्य हृष्टः ;
स्वप्ने मया या किल दृष्टपूर्व्वा
सैवेयमप्राकृतमूर्त्तिरम्बा
सुवाण्यैव सह धर्म्मपत्न्या
भक्त्या विनीतः प्रणनाम राजा*॥३७-४१॥कुलकं

वन्दारुमन्दारमनोज्ञवर्णां
देहद्युतिद्योतितदिग्विभागाम्
मन्दस्मितानन्दितभक्तवृन्दां
फुल्लारविन्दार्पितपादपद्माम् ;

---

* तत्र जलमध्ये हि उत्तराभरे कुमुदैः सम्मिलितवान् निश्चलमेव कृत्वं पूर्व्वं विद्
कण्ठाम्बुनि कण्ठवर्ष्णे पूर्व्वकृत्ये सहकपोत्थायाम् पान्थसङ्गतेन अतएव सं
निद्राम निषद्याभ्यास नमस्य आकाशात निपतत् चञ्चलाक्षे आननम उज्ज्वा
सकलीकुर्व्वन्, विधीयन्ते विस्मयमिव सकलमिव लक्ष्यमाणम् ततपरमेव पर
एव सम्यक श्रीभेदत्वात् वञ्चनासदृशानां विलोलमेव गमनवशात् चञ्चलत्वं
मात्र कश्चित् तादृशम् अतएव विपत्तु दुरैकम अतिरम्यं मानसोत्थं मा
सरीसृपस्य मातेर्मध्यम वायुना भूतलाभिमुखं चालित श्रमात् मृणालदण्डवदि
अर्द्धोन्नमिव पद्ममिव प्रतीयमानम् ईदृशम अतुल्यविम्बोष्ठमुख्य निरुपमसौन्दर्य्य
मुखं वदनं दधाना धारयन्तीं कमिव सम्यक् विभक्तावयवा मध्यम वीक्षणस्थम
गतवत इति इति देवी नारी या काश्चित् ललना तत्र निमेषशून्या नैवस्पन्दनरा
ज्ञात इति देवी यो काश्चित् सुरासिनी तत्र पाशाभ्युक्ता हस्ते पायस च
दधती इति इति देवी तां हरिप्रियां लक्ष्मीं ददर्श पश्चात् द्रुतम उत्थित
अभूमिस्पृशम पृथ्वीभूतला स्थितां ताम एव सपत्नीकः हृष्टः मया स्वप्ने या
पूर्व्वा दृष्ट सैव अप्राकृतमूर्त्तिं अलौकिकशरीरा अम्बा माता लक्ष्मी एव सुवा

अचिन्तनीयोपगमां विलोक्य
निश्वासमोचेऽपि निवृत्तवृत्तिः
अमन्दमानन्दमवाप्य यावत्
स्तोतुं नृपः प्रक्रमते सभार्य्यः ;
तावत् समायान्तमतीवभीमं
नीलोत्पलश्याममनूनकायम्
भूकम्पनुन्नासितशैलदर्पं
ददर्श कश्चित् पुरुषं विदूरात् ॥४२-४४॥ (त्रिभिर्विशेषकम्।)
विश्वासितद्रावितजीवसंघः
शनैः समेत्य क्षितिपं जगाद ।
शनैश्चरोऽहं नृप ! सूर्य्यपुत्रः
त्वामागतः संशयनोदनार्थम् ॥ ४५ ।
हरिप्रियेयं जलधेस्तनूजा
छायोदरादस्मि कृतात्मलाभः ।
निष्पक्षपातो यद सम्प्रधार्य्य
प्राधान्यमस्या मयया समेति ॥ ४६ ।
निशम्य वश्याहृतवद् स राजा
तस्थौ क्षणं किंप्रतिपत्तिमूढ़ः ।
अथाश लब्धप्रकृतिर्नतस्तम्
प्रोवाच बद्धाञ्जलिरेनमेवम् ॥ ४७ ।
सुरैरसाध्यं सहसांश ! मद्विधः
कथं समाधातुमलं भवेदिदम् ।

तथापि यत् नाथ ! नियोजितस्त्वया
विचार्य वच्मि तदहं यथामति ॥ ४८ ॥
परेद्यवि प्रातरहं ग्रहेश्वर !
प्रबुद्ध एव प्रयतः सदोऽरुहे
प्रयापयिष्ये समयं निराकुलः
प्रतीक्षमाणो भवतोः शुभागमम् ॥ ४९ ॥
तथेति तस्मै प्रतिशुश्रुवानसौ
श्रिया समेतस्तदुपान्तवर्त्तिभिः ।
समीक्षितः साद्भुतमालजो रवे-
स्तिरोदये पश्यत एव भूपतेः ॥ ५० ॥
नरपतिरपि तं शनेर्निदेशं
मनसि दधत् भवनं प्रियानुयातः ।
किमिदमुपनतं न बोद्धुमीशो
न च शुभमेतदिति प्रतर्क्य यातः ॥ ५१ ॥

इति श्रीश्रीवत्सचरिते महाकाव्ये
विद्यमान श्रीशनैश्चरसन्दर्शनो नाम तृतीयः सर्गः ।

जयेति जीवेति च झंकृतिच्छलात्
उदीर्यते चाविरतं मधुव्रतैः ॥ ५ ।
निलीनभृङ्गैः कुसुमैः सुलोचना
लताङ्गुलिषम्पककोरकैरियम् ।
विभावरी दर्शयतीव वल्लभं
प्रियां वयस्यां स्थलपद्मिनीं मुदा ॥ ६ ।
इयञ्च तं वीक्ष्य मुदा हसन्मुखी
गतव्यलीका नितरां विकाशते ।
सखीं समीक्ष्य प्रियसङ्गगर्विताम्
न का समभ्येति परां मुदं सखी ॥ ७ ।
विधोः करस्पर्शभिया सरोजिनी
प्रयाति संकोचमलं समङ्गकम् ।
समाकुला तिष्ठति, का पुरःस्थितं
विलोक्य हृष्येत् प्रतिनायकं सती ॥ ८ ।
शिरोधरा सा विनमय्य भासते
जगत्सु या सूर्य्यमुखोत्युदीर्य्यते ।
परस्य पुंसः पुरतो विनम्रता
पतिव्रतायाः खलु शोभतेतराम् ॥ ९ ।
विभाति सर्व्वं विशदान्तरं जगत्,
वितापमुद्राश्रितवस्तु शीतलम् ।
परम्परमप्येति सुरम्यतां विधौ
विराजमाने ह्यनुकूलतां गते ॥ १० ।

सलीलखेलत्तुहिनांशुदीधितिं
  तरङ्गयन् निर्झरिणीं मुहुर्मुहुः
प्रनर्त्तयन् पुष्पितवल्लरीततिं
  ससम्भ्रमोद्भ्रान्तमधुव्रतातिथिम् ;
परागमुष्टिं नवकुङ्कुमारुणं
  किरन् सलीलं विशदे दिशां मुखे ।
विचालयन् उत्कलिकासमाकुलां
  मुहुर्मुहुस्तां नवमालिकालताम् ;
सकौतुकं किसलयबन्धनं चण
  द्विरेफवृन्दानुगतं ससौरभम्
निपातयन् भूमितले च नीलिका-
  प्रसूनराशिं शुभलाजविभ्रमम् ;
विशन् गवाक्षेण गृहं वरस्त्रियाः
  जिहीर्षुरङ्गादिव किञ्चिदीप्सितम्
"इयं मृगाक्षी चतुरा दिवीर्षया
  छलेन निद्रात्युत तत्त्वतस्तथा"
इतीक्षितुं भीत इव स्खलन् शनैः
  मरुत् समाकर्षति तत्पटाञ्चलम्॥*॥ १-१४ कलापकम्।

---

* सलील खेलन्ती तुहिनांशोश्चन्द्रस्य दीधितिः रश्मिमाला यस्यां] तादृशीं निर्झरिणीं नदीं मुहुः मुहुः तरङ्गयन् सञ्जाततरङ्गां कुर्वन्, ससम्भ्रमोद्भ्रान्तमधुव्रता तिथि ससम्भ्रमम् उद्भ्रान्ताः उत्पतन्तः मधुव्रताः भ्रमरा एव अतिथयो मधुपानार्थिनो यस्यां तादृशीं पुष्पितवल्लरीततिं संजातकुसुम लताजाल प्रनर्त्तयन् कम्पयन्, नवकुङ्कुमारुण परागमुष्टिं विशदे दिशां ककुभां नायिकानाञ्च मुखे प्रारम्भे वदने च सलील किरन् विक्षिपन् उत्कलिकासमाकुलाम् उत्कलिकाभिः कुड्मलैः

हिमप्रभेऽभ्रे परितः स्थितेऽम्बरे

प्रयाति मन्दच्छवितां क्षणं विधुः

क्षणं तिरोधाय लवे तड़िल्वतो

गते च धत्ते लसदंशुतां पुनः ;

प्रविश्य च स्वेन करेण चित्रित

सुरायुधाभं शकलं पयोमुचाम्

विचित्रवस्त्राञ्चलसंवृतं क्षणं

वराङ्गनावक्त्रमिवावभासते* । १५, १६ । युग्मकम्।

---

उत्कण्ठया च समाकुला श्यामा यौवनमध्यस्था या नवमालिकालता काचित् विरहिणीव तुङ्ग विचालयन् विचाल्यतां व्याकुलान् कुर्वन्, घनघनाभिवर्षन् आकाशलोकात् जाल वत् प्रतीयमान निपतज्जल बिन्दुजालं विरहजलधाराश्रुवत् शरीरं नीलवा मूलराशि शेफालिकापुष्पनिकरं भूमितले सन्तीर्णं क्षण निपातयन्, गवाक्षेण गृह विशन् प्रविशन् वर्तितया कस्याश्चन उत्तमाङ्गनायाः अङ्गात् किञ्चित् ईप्सितम् अपहरन्नसौ रमणः भूषणम् जिहीर्षुरिव चौरयितुमिच्छुरिव स्पृशमानः, इय चतुरा मनस्वी दिधीर्षया मम धारयेच्छया स्फुटेन निद्राति एत अथवा नत्वत तथा स्वरूपतो निद्राति इति शङ्कया भीत इव श्वसन् शनैः वहन् निश्वास स्पर्शन मन्द वायु (कर्तृपदम्) तत्पटाञ्चल तस्या वराङ्गनायाः वस्त्राञ्चलं समाकर्षति चालयति।

* अम्बरे आकाशे हिमप्रभे शुभ्रे अभ्रे मेघे परितः समन्तात् स्थिते सति विधुः चन्द्रः क्षणं मन्दच्छवितां म्लानकान्तितां प्रयाति प्राप्नोति, तडिल्वतः मेघस्य लवे खण्डे क्षणं तिरोधाय आच्छाद्य गते अपगते अपि पुनः भूयः लसदंशुतां उज्ज्वल-कान्तितां धत्ते धारयति विधुरिति शेषः, क्षणं स्वेन करेण किरणेन हस्तेन च चित्रितम् अतएव सुरायुधाभम् शक्रधनुःसदृशं पयोमुचां मेघानां शकलं खण्डं प्रविश्य विचित्रवस्त्राञ्चलसंवृतं नानावर्णवस्त्रावृतं वराङ्गनावक्त्रमिव उत्तमाङ्गनामुख मण्डलमिव अवभासते शोभते विधुरिति शेषः ।

तया स्त्रिया तेन च सूर्य्यसूनुना
 परेद्युरागत्य यदानुयोक्ष्यते,
किमुत्तरं दास्यति तद्विनिर्णयं
 विधाय राजा सचिवैः समन्वितः ;
विवेश चिन्तासदनं, विलोक्य तां
 निशि प्रयान्त्यामपि गाढ़तां तथा
क्षयालकां दुर्मनसञ्च जायतो-
 मभूच्च चिन्ताकुलमानसो भृशम् ॥१७,१८॥ युग्मकम् ।
[illegible]
 उपेत्य पार्श्वं परिषस्वजानः ।
प्रमृज्य हस्तेन कपोलपालि
 बाष्पोदकं तामवदत् स चिन्ताम् ॥ १९ ।
किमित्यकाण्डे वद कोमलाङ्गुलि-
 च्छदे करान्ते वदनेन्दुमण्डलम् ।
निवेश्य बाष्पाकुललोचना प्रिये !
 सगद्गदं रोदिषि मुक्तभूषणा ? २० ।
त्वयि प्रकृष्टप्रणया निसर्गतः
 सहोदरा मे कमलामलश्रिया ।
अपत्यतश्चाप्यधिकं सदा त्वयि
 प्रसूः शुभे स्निह्यति मत्तकाशिनि !* ।२१।
समग्रशक्तौ मयि जीवति प्रिये
 विमानना स्यात् परतः कथं नु ते ?

---

* मत्तकाशिनि !—हे वरारोहे ! हे सर्वाङ्गसुन्दरि ।

क इद्धकोपस्य हि जाग्रतो हरेः
सटा समाकर्षति सञ्जिजीविषुः ? २२ ।

त्वदेकहार्दस्त्वदधीनजीवित
स्त्वदेकजानिर्निपुणं* विचिन्तयन् ।
न लक्षये स्वल्पमपि स्खलत्यय
प्रिये विनीतिस्खलनं बहुक्षमे ! २३ ।

तदद्य किञ्चित् किमु सुमया त्वया
व्यलोकि हार्दस्खलनं मदाश्रयम् ?
न चित्रमेतत् स्वपतोऽपि हार्दिनी
विभावयत्येव मनोऽविनीतताम् ॥ २४ ।

न जानता तन्वि ! मया कदापि ते
व्यधायि पापं†, ननु चेतसि कार्य्यतां ।
अजानता चेत्, तदबोधपूर्वकं
कृतं तथा नूतनमित्युपेक्ष्यताम् ॥ २५ ।

निदानमाधेः किमु निह्नुषे प्रिये !
चिराय मह्यं परिपृच्छते वद,
वदाद्य चाभाष्यमपि त्वदाश्रित
न तन्वि ! किं मां गणयस्यकारणम् ॥ २६ ।

इति प्रियेणाभिहिता सुधात्मकान्
ततः समुत्सार्य्य मुखेन्दुमण्डलात् ।
तदाननासक्तदृगित्थमाकुला
वरानना प्रक्रमते स्म भाषितुम् ॥ २७ ।

---

* त्वमेव एका जाया यस्य तादृशः । † पाप—विप्रियम् अनिष्टमिति यावत् ।

कियच्चिरं कुत्र च किंविधं तपः
  सुदुष्करं शैलभुवाप्यपर्णया ।
कृतं मया, येन भवादृशोऽधुना
  चिरानुकूलः पतिरापि वल्लभ !* २८ ।

तपस्तु तावत् कृतमेव, यावता
  भवद्विधः सत्पतिरेव लभ्यते ।
भवन्त्यपुण्या बहवोपि संसृतौ
  न लक्षये मामिव किन्तु कामपि ॥ २९ ।

स्थिरप्रसादस्य समयसम्पदो
  मदेकजानेर्भवतः प्रसादतः ।
चकत्तुदान्या न, स्त्रियाय तां व्यथां
  स सूर्य्यसूनुः किल यां करिष्यति ॥ ३० ।

यदा पापः सौरिः सति सुरसमाजे सुचतुरे
  भवन्तं सम्प्राप्तो ननु विवदमानः कमलया ।
तदा ज्ञातं राहुर्विधुरविधिनामा कलयितुं†
  मुखेन्दुं पूर्णं मे विकटवदनं व्याददे इति ॥ ३१ ।

कृ यप्रदा पत्युरलक्षणीयं
  चिन्तेति वक्ष्यन्ति समस्तलोकाः ।
तत् संस्मरन्त्या मम पश्य मूर्द्धा
  विघूर्णते सीदति गात्रबन्धः ॥ ३२ ।

---

* हे वल्लभ ! अपर्णया, तपश्चरणकाले पत्रभक्षणमपि अकुर्व्वत्या शैलभुवा पार्व्वत्या सुदुष्करं किंविधं तपः कियच्चिरं कुत्र मया कृतं, येन तपसा अधुना भवादृशः चिरानुकूलः पतिः आपि मया प्राप्तः ।   † ग्रसितुम् ।

निर्मांसदेहोऽतिकरालदंष्ट्रः
 शुष्कोदरः श्मश्रुजटावकीर्णः।
प्रोन्नतपन्नासः पृथुकोटराक्षः
 प्रतिक्षणं हन्त्यति सूर्यसूनुः ॥ २३

वमतीव स्फुलिङ्गोर्मी
 निष्ठ्यूत इव चक्षुषोः।
पश्य भीषयते गच्छन्
 मामयं यमसोदरः ॥ २४ ॥

इति ब्रुवाणां गुरुकम्पकातरां
 विलोलनेत्रां दयितां विचेतनाम्।
भुजे समावेशितकम्बुकन्धरां
 नृपः समाश्वासयितुं प्रचक्रमे ॥ २५ ॥

अस्त्यत्र कश्चित् विधिरित्युदाहृतो
 यद्रोचतेऽस्मै कुरुतेऽयमाशु तत्।
समस्त एवं तदधीनवृत्तिनि
 प्राणेश्वरि! किं तव रोदितैः प्रयोजनम् ॥ २६ ॥

सर्वं कृतं तेन धनेश्वरेण
 कष्टं महत् घोरमिवार्णवं तत्।
समुत्तरीष्यामि वरोरु! पीत-
 कल्पेन वृत्तेन तवैव नूनम्* ॥ २७ ॥

---

* हे वरोरु! पोतकल्पेन अर्णवयानतुल्येन तवैव वृत्तेन चरितेन पातिव्रत्येन नूनं तेन धनेश्वरेण कृतं सर्वं तत् कष्टं महत् घोरम् अर्णवमिव समुत्तरीष्यामि।

अज्ञातगतयामेयम्
एवमासक्तचेतसोः ।
जाग्रतोरेव नौ कान्ते !
क्षयं याता क्षणात् क्षपा ॥ ३८ ॥

रात्रिर्गता वहति पश्य विभातवायुः
कूजत्ययं पिकवरस्तव पञ्जरस्थः ।
अस्याः स्रजः सुमनसः* सुमनस्त्वयैताः
दृष्ट्वेव ते गतिमिमां मलिनीभवन्ति ॥ ३९ ॥

इन्दोर्विहारभवने गगने विकीर्णं
पुष्पोपहारमिव सुन्दरऋक्षजालम् ।
अस्मै परेद्युरिव दातुमियं नु सन्ध्या
रक्तांशुकाञ्चलगतं कुरुतेऽवचित्य† ॥ ४० ॥

लक्ष्मीदयस्य पुरतोऽतिविनीतभावं
मित्रस्य साधुचरितः पुरुषो हि धत्ते ।
आवेदयन्निति रवेर्वसुपालितोयं
चन्द्रोऽस्तमेति तमवेक्ष्य विलीनशोभः‡ ॥ ४१ ॥

---

* सुमनसः—पुष्पाणि परत्र सुकातरा स्त्रियश्च ।

† अथ सन्ध्या तथा इन्दोः विहारभवने गगने विकीर्णं विक्षिप्तं सुन्दरम् ऋक्षजालं नक्षत्रसमूहम् अवाप्य एकैकशो गृहीत्वा परेद्युः आगामिदिवसे अस्मै इन्दवे दातुमिव दातुकामेव रक्तांशुकाञ्चलगतं रक्तवस्त्रप्रान्ते अवचित्य निबद्धं कुरुते ।

‡ साधुचरितं सदाचारं पुरुषं लक्ष्मीदयस्य यस्य उदयं वृद्धिं प्रकाशञ्च यस्मात् तस्य मित्रस्य अस्तो. सूर्यस्य च पुरतः समक्षम् अतिविनीतभावम् आत्मनम्रता धत्ते हि धारयति खलु तात इत्येवम् आवेदयन् ज्ञापयन् रवेः सम्यक्

सत् सभामण्डपं गत्वा
कृतनित्यक्रियाविधिः
तयोरागमनं कान्ते !
प्रतीक्षिष्ये प्रतीक्ष्ययोः ॥ ४२ ॥

इति श्रीश्रीवत्सचरिते महाकाव्ये उदितचिन्ता-
चिन्तोद्वेगो नाम चतुर्थः सर्गः ।

---

यस्मिन् वसुपालित यष्टीम् किरके यस्मिन् पालित छायित घट चन्द्र तं रवि न् घवेस्य विलोनयोम ज्ञानकानि निगूढोद्धतमाव सन् घत्त निचय ज्ञानम् एति गच्छति ।

---

# पञ्चमः सर्गः ।

अम्लानवदनो राजा
धृतराजपरिच्छदः ।
शनैश्चरेष्टदेवीं ताम्
अस्थिमालाविभूषिताम् ;
सर्पनद्धजटाजूटां
लोलजिह्वां भयंकरीम्
द्वीपिचर्म्मपरोधाना
त्रिपुरारिविमोहिनीम् ;
खड्गनीलोत्पलकरा
कर्त्तिखर्परधारिणीम्
इन्दीवरदलश्यामा
रक्तनेत्रा चतुर्भुजाम् ;
ज्वलच्योषितयोरन्त-
राले घोरे व्यवस्थिताम्
लम्बोदरीं करालास्या
खर्व्वां सर्व्वोन्नतोन्नतिम् ;
शवरूपे महाकाले
प्रत्यालीढाख्यसंस्थिताम्
तारा विचिन्तयन् भक्त्या
विवेशास्थानमण्डपम् ॥ १-५ । कुलकम् ।

दक्षिणेन नृपतेर्वरासनं*
स्थापिते च कलधौतनिर्म्मिते†
उत्तरेण रजतैश्च कारिते
पीठ आत्मविभवानुरूपके ;
आस्थानगेहे च नृपाज्ञया ततः
पुष्पोपहारैश्च सुरम्यभङ्गिना
सज्जीकृते मृष्टसुपिष्टकुट्टिमे
तैः सैश्च नानावलिभिः समन्विते ;
दिग्भ्यः समेते दैवशः समन्तात्
लोकैरहम्पूर्व्विकया विशद्भिः
प्रदोषकौतूहलमूर्द्धतैवैः
नीरन्ध्रवद्माजिरभूमिभागे ;
सधूमरेखं ज्वलदर्च्चिषं पुरा
हुताशनं वा चलविद्युतं घनम्
सुबोध राजा निपतन्तमम्बरात्
ततः प्रिया स बुबुधे शनैश्चरम् ॥ ९ ॥ कलापकम् ।
शनैश्चरः प्रागवतीर्य्य पुष्पकात्
प्रसारयामास करं समाहृतः ।
तमेव पाथोनिधिसम्भवा‡ रमा
समालम्ब्य ऽवततार च क्षणात् ॥ १० ॥

---

* वरासनमित्यत्र दक्षिणेन उत्तरेण च इत्येतयोर्योगे द्वितीया ।

† स्वर्णमये ।

‡ पाथोनिधिसम्भवा—"समुद्रजा लक्ष्मीरिति यावत् ।

विमोहितोऽसौ हरिमायया श्रियं
न्यवीविशत् तां प्रथमं वरासने ।
ततः परं द्राक् रजतेन निर्मितं
स्वयं तदभ्यास निकृष्टमासनम् ॥ ११ ॥
ततश्च राज्ञा मुदितान्तरात्मना
यथाविधि प्राक् समपूजि सिन्धुजा ।
अनन्तरं भक्तिपरेण यत्नतः
प्रियैः समस्तैर्बलिभिः शनैश्चरः ॥ १२ ॥
तथाप्रशस्ताय नृपाय सूर्यज-
श्चुकोप शुद्धव्यपरोपणात् ततः ।
क्रुधाग्निं नेत्रात् गिरिगह्वरोपमात्
उदगिरद्ग्निर्निर्गमात् निरन्तरम् ॥ १३ ॥
स चाह भूपं शृणु रे नृपाधम !
त्वमद्य यस्मात् अपकृष्य मां कुलात् ।*
प्रकर्षसीमां बहुवल्लभां श्रियं
तदस्य तूर्णं फलमाप्स्यसि ध्रुवम् ॥ १४ ॥
श्रियः पतिर्मे समभूदयत् क्रुधं
क्रुधोऽनुरूपं यदवाप, तत् चायम्
स्मृतिं न ते यातमबोध ! दुर्मते !
तदत्र जागर्ति-जने जनेऽमियम् ॥ १५ ॥
अमांसदेहो रुधिराङ्गसौष्ठवा
सुचारुकेशोयमहं जटाधरः ।

---

* प्रकर्षसि प्रवर्षसि ।

सरोजनेत्रेयमहन्तु कोटरो-
पमेयसस्तत् बहुमन्यसे श्रियम् ? १६ ।

धनाधिदेवीति धनेर्गरीयसीं
हरिप्रिया मन्यसि रे नृपाधम ।
न वेत्सि तस्मिन् प्रतिकूलता गते
शनौ, क्व लक्ष्मी, क्व च तत्पतिर्हरिः ॥ १७

नित्य सुधार्त्तोऽस्मि सदास्मि क्षसः
दीर्घोऽस्मि सूक्ष्मोऽस्मि च कालरूपः ।
सर्व्वसयायास्मि विमानितः सन्
प्रसादित सर्व्वसुखाय चास्मि ॥ १८ ।

एव प्रकोपेण परीतचित्तं
सञ्जातभीमभ्रुकुटीकरालम् ।
प्रचक्रमे साध्वससन्नकण्ठः
शनैः शनि सान्त्वयितुं नृसोमः ॥ १९ ।

जाने प्रदाहार्त्तिकरीं नु शक्ति,
प्रविष्टवानस्मि तथापि वह्नौ ।
तवैव सम्मानविवर्द्धनार्थं
त्वत्कोपपात्र भगवन् ! भवामि ॥ २० ।

अधत्त सम्मानविशेषमार्य्यैः
श्रियः स्वय, तेन विमोहितोऽहम् ।
भिमोनिताचो रजसा नरत्वा-
दज्ञासिषं ता भवतोऽधिकेति ॥ २१ ।

भवान् स्वयं स्वर्णमये च पीठे
प्रवेशयत् तां बहुमानपूर्व्वम्।
त्वयि चताख्निन् स्वयमेव यथात्
पीठे, तदा किं करवाणि तात! २२।

स्वयं त्वया या कृतसाधुपूजा
सैषा कथं तात! भवेत् विमान्या।
विमोचनार्थं यदि देव! तादृक्
कृतं त्वया स्यात्, न मया विबुद्धम्॥ २३।

स्पृशामि ते नाथ! पदारविन्दम्,
पयोधजं दोषमिमं क्षमस्व।
भवादृशानां पुरतोऽस्तेव
दोषमसृष्टो नहि कारणं किम्? २४।

इति ब्रुवन्तं नृपतिं गणेश्वरः
दहन्निव क्रोधमयेन वह्निना।
उवाच रे! स्पष्टमिदं कृतं त्वया
कृतं प्रियो गौरववर्द्धनार्थिना॥ २५।

अरे पशो! चत्रियपांशुल! त्वया
नृपासनस्यास्य पुरः समाहृतिः।
प्रदीप्तधामोत्करनिर्म्मितं कथं
न रचितं चासनमुत्तमन्यया॥ २६।

भ्रूकुट्या भीमदर्पो यदमम्बिरतोचामघोरस्फुलिङ्गः
मेघ रक्तोत्पलाभं दशनविदलितां चोष्ठमुद्रां दधानः।

कपोतपक्षौ धुतपक्षताडितं
　चकार कान्तं, कुररी ररोद च ॥ २० ॥

महीलोद्गमपहाय धेनुभिः
　गव्यमुक्तमुखं विलोकितः,
मद्रवद्भिरभितो भयाकुलैः
　मुक्तपुष्करपथाय खेचरैः* ;

इच्छतीभिरिव जालमार्गतः
　पञ्जरस्य सहसा विनिर्गमम्
चासतारतरचित्क्रतिच्छलात्
　सारिकाभिरिव याचितागमः ;

हा हतास्मि किमिदं निपात्यते
　दुर्दैवपक्षकेन मुग्धक !
इत्युदीर्य शुककम्पया भयात्
　पोषितः प्रथमया नृपात्मया ;

रे नराधम ! मुनेः प्रकोपजम्
　माचिरेण विकटं फलं त्वया
भक्ष्यते ननु वदामि भक्ष्यते
　मौरिरित्यभिदधत् तिरोदधे ॥ ११—१८ ॥ यथा

[illegible]-
　[illegible] गतवति क्रमेण सा ।

---

* [illegible]

सिन्धुजा नृपतिगेहिनीं समा-
श्लिष्य तं नृपमवोचदादरात् ॥ २५ ।
नन्दनात् शिथिलबन्धना चितौ
आहृता सुमनस सहलता ।
तुभ्यमर्पितवती, समाहृतो
भूपयास्मिशिर एतयाखिलम्* ॥ २६ ।
कर्कोटदष्टेन हि येन गर्विता
सती हसत्येव बहुप्रिया प्रियम् ।
नृपाल तद्रत्नमसिन्धुसम्भव
सतीत्वरूप प्रियतेऽपरिच्छतम्† ॥ २७ ।
पश्य ते क्रोधवशाद् यतिष्यति
तमोभिराच्छादयितुं शनैश्चर ।
पतिव्रतायां नृप ! तन्मणिप्रभा-
प्रदर्शिताध्वा सुचिरस्थिरस्थिति ॥ २८ ।
सतीत्वमाहात्म्यमशक्यवर्णनं
तथापि किञ्चित् शृणु तत् समाहितः ।

---

* शिथिलबन्धना मदकला वायुना नन्दनात नन्दनकाननात् चितौ आहृताम आनीता सुमनस पुष्प … आपितवती दत्तवती, सा समाहृत सत् एतया सुमनसा आवामिव. … अखिल शिरसर भूपय … , … चितौ … पृथिव्यामवतीर्णाम् … मदप्रभूतां विना पुष्प दत्तवती, सा समाहृत एतया … पुष्प … इति भावार्थः ।

† हे नृप ! सती पतिव्रता कर्कोटदष्टेन … येन गर्विता सती बहुप्रिया प्रियमानिकर्दं … अभिमुखमवम … तत् सतीत्व रूप रत्नम् … यत् … प्रियत … ।

स्वामिपादनलिनं विचुम्ब्य सा
जानकी विशदमन्दहासिनी ।
आजुहाव दहने वपुः क्षणात्
चेतसा स्मृतसतीपदाम्बुजा ॥ ४५ ॥

क्षोभयन् दश दिशः प्रतिघ्नतां
द्रष्टृवर्गनयनानि तेजसाम् ।
राशिरग्निमविशत् तडिद्द्युतिः
विस्मयोच्चकितरामवीक्षितः ॥ ४६ ॥

तत्र कापि महिलाद्भुताकृतिः
स्वर्णभावहृतसर्वसंज्वरम् ।
ज्योतिरुज्ज्वलतरं हुताशनात्
बिभ्रती जनककन्ययेक्षिता* ॥ ४७ ॥

'मा विदेहतनये ! भयं कृथाः'
इत्युदीर्य करुणामयी ततः ।
जानकीं समुपगृह्य विह्वलाम्
अङ्कमध्यमनयत् समादृता ॥ ४८ ॥

वायुना गगनखेलगामिना
द्राक् प्रशान्तमहसोऽदीधितौ ।
अग्रतो जनकजामलद्युतिः
साद्भुतैः समवलोकि दर्शकैः ॥ ४९ ॥

---

* जनककन्यया कापि अद्भुताकृतिः स्वर्णभावहृतसर्वसंज्वरं हुताशनात् उज्ज्वलतरं ज्योतिः बिभ्रती कापि महिला तत्र ईक्षिता।

तां विलोक्य कपयस्तथाविधां
   प्रीतिहर्षिततनूरुहास्ततः ।
नेदुराप्लुतपराः समन्ततः
   तत्पदञ्च नियत चुचुम्बिरे ॥ ५० ।

किन्नराः क्वणितवल्लकीगुणाः
   संजगुर्ललितमम्बरे मुदा ।
मञ्जुनिक्वणितरत्ननूपुराः
   निर्भरञ्च ननृतुस्तदङ्गनाः ॥ ५१ ।

साङ्गतस्य नितरां प्रवेदुषो
   वल्लभस्य चरणे नतां सतीम् ।
पारिजातकुसुमैः सुराङ्गनाः
   गन्धमुग्धमधुपैरवाकिरन् ॥ ५२ ।

यतो रविसुतादहं सुवर्णरत्न । संवर्द्धितां
   विचक्षणतया त्वया निपुण । राजकार्य्ये, ततः ।
त्वयि स्थिरतमा रमाप्रलयमस्तु* पृथ्वीपतौ
   इति चितिभृत निगद्य कमला द्युलोकं ययौ ॥५३।

इति श्रीश्रीवत्सचरिते महाकाव्ये शनैश्वरातिक्रोधो
नाम पञ्चमः सर्गः ।

---

*रमाप्रलयम् — रमा + अप्रलयम् ।

# षष्ठः सर्गः ।

छिद्रं क्रमेण संप्राप्य
राजानमाविशत् शनिः ।
वैगुण्यात् तस्य नृपतिः
महत् कृच्छ्रमुपागमत् ॥ १ ॥

प्रथमं जननी तस्य
मृताप्यन्ततमागता* ।
पश्चात् सहोदरा नाम्ना
कमला विमलक्रिया ॥ २ ॥

महासमृद्धिं नृपतिः
निवापं मृतयोस्तयोः ।
चकार दानसन्तुष्ट-
सर्व्वजाति यथाविधि ॥ ३ ॥

शनैः शनैर्महानिष्ट-
शंसिनः सुभयावहाः ।
महोत्पाताः प्राणभृतां
भूयांसो जज्ञिरे ततः ॥ ४ ॥

दृष्ट्वा से भर्त्तुरौद्धत्यं
दशान्तरमुपस्थितम् ।

---

* मताप्यन्तमम् अमरत्वम् आगता प्राप्ता इति विरोध, मृता अन्तम् मृत्युम् आगता इति तदर्थम् ।

इति चिन्ताकुलेवासौ
चकम्पे भूमलाचला ॥ ५ ।
ताड़िताश्चार्णवा सर्वे
वात्यया तीव्रवेगया ।
अन्योन्याघातवाचाल
वीचयः सञ्जघूर्णिरे ॥ ६ ।
आहताः पोतसंघाश्च
भग्ना पण्यप्रपूरिता ।
भग्नाशैश्च सार्थवाहै
र्ममज्जुरर्णवाम्भसि ॥ ७ ।
भग्नशाखाप्रशाखाश्च
केचित् वृक्षा हृतश्रियः ।
केचिदुत्पाटिता भूमौ
पतिता अवतस्थिरे ॥ ८ ।
अवग्रहेण वारेश
पीड़ितानि क्वचित् क्वचित् ।
अदृष्टपोषं विशुष्काणि
सर्व्वशस्यानि जज्ञिरे ॥ ९ ।
अतिवृष्ट्या क्वचित् भूमि
र्भावैः* स्थावरजङ्गमैः ।
सहिता जलमग्नाभूत्
शनैश्चरनिपीडनात् ॥ १० ।

---
* भावै — पदार्थै ।

पश्यतो नृपतेः सच्छं
विकटं हसतः शनेः।
धूमकेतुच्छलात् दंष्ट्रा-
मयूखा इव रेजिरे ॥ ११ ॥

अकारणं नृपखेदं
पीड़नं वीक्ष्य मत्पिता।
क्षोभं मास्म गमत्, तेन
परिवेशमिषात् शनिः
प्राकारेणेव कृतवान्
संवृतं सूर्य्यमण्डलम् ॥ १२ ॥

मदन्वये प्रसूतोऽयं
श्रीवत्स इति मा प्रति
कदाचित् क्रुध्यता राहुः
शनिना संप्रयोजितः ;
ग्रसेत् मामिति भीत्येव
परिधिच्छद्मनानिशम्
आत्मानमग्निप्राकार-
वेष्टितं कृतवान् विधुः ॥ १३,१४ ॥

सुतशोणितधाराभिः
धरारुणकलेवरा।
मन्ये क्षितिरासृजा भिन्न-
हृदयात् गलितेन सा ॥ १५ ॥

यमप्रयाणप्रहता
पटहा इव सर्वदा ।
निर्घाताः* विदधुर्घोरं
निर्घोषं हृदयच्छिदम् ॥ १६ ॥

महिषस्य कृतान्तस्य
जयार्थमुपसर्पतः ।
खुरोद्धूता पांशुवृष्टी
रविधाम तिरोदधे ॥ १७ ॥

मन्ये तदा† दिशोऽशक्ता
द्रष्टुं भर्तुर्निपीडनम् ।
मलिनांशुकसंच्छन्न-
मुखा इवाभवन् शुचा ॥ १८ ॥

दिने दिने समभवत्
वज्रविस्फोटनिस्वनः ।
प्रचण्डज्वालो दिग्दाहो
दग्धस्थावरजङ्गमः ॥ १९ ॥

मन्ये ता अर्चिषा द्रष्टुं
भर्तुः कष्टं तथाविधम् ।
आशाः हताशा विविशुः
पावकं तं भयङ्करम् ॥ २० ॥

---

* निर्घाता—उत्पातविशेषाः । † तदा पांशुवृष्ट्या ।

उन्मुखीनां शिवानाञ्च
　रावित्रीणां निरन्तरम् ।
उल्का वक्त्रात् विनिर्याता
　बिभेद विततं तमः ॥ २१ ॥

शुष्कवृक्षे श्मश्वच्छादे
　निषण्णा वायसावलिः ।
घोरं रराण हृदयं
　स्फोटयन्ती प्रतिक्षणम् ॥ २२ ॥

बहुना वा किमुक्तेन
　प्राग्देशोऽखिल एव सः ।
दुर्भिक्षाकालमरण-
　व्यसनैरर्द्दितोऽभवत् ॥ २३ ॥

श्वानः शृगालाश्च तदा
　अट्टाट्टाश्चक्रुः श्मशान् ।
चितानलस्य संतप्ताः
　तेषां हि जठरानलः ॥ २४ ॥

निर्म्माणकौशलात् स्रष्टुः
　मर्त्यमरावतीं श्रियम् ।
सर्व्वसुखसम्पन्ना
　या दधौ ह्यमरावती* ;
पतदट्टालिकाराजिः
　भ्रष्टश्रीर्दुर्निरीक्षणा ।

अनुचक्रे पुरोमैन्द्रीं
संसरत्कौशिकेति सा ॥ २१,२६ । युग्मकम् ।
कीलिता इव लोकानां
कपोलेषु कराः शुचा ।
निविष्टानीव चक्षूंषि
नासाग्रेषु निरन्तरम् ॥ २७ ।
उत्कीर्ण इव सर्व्वेषां
कर्णेषु रोदनध्वनिः ।
हा कष्टमिति जिह्वासु
नैसर्गिकमिवाभवत् ॥ २८ ।
उष्णान्तर्दाहभीतेव
नृपतेर्नयनोदरम् ।
नाभजत् सुचिरं निद्रा
लोकविश्रामदायिनी ॥ २९ ।
धवल उन्नतश्चैव
नन्दिनानुचरेण च ।

---

* सर्व्वसुखसम्पन्ना सर्व्वेषु वस्तुषु सुखेन सम्पन्ना या अमरावती नाम
सुरराजधानी निर्म्माणकौशलात् शिल्पनैपुण्यात् "स्वर्गे अमरेव" इती
... अमरावतीम् इन्द्रनगरीम् अतिक्रान्ता स्वर्गपुरीविजयिनी श्रियं आभा
धृतवती, सा अमरावती इदानीम् ... पतन्ती मया भूमौ
... राजि ... यथा तादृशी मध्ये दुर्निरीक्षणा केवल
... कौशिका ... परस्पराकीर्णत्वात् ... परिभ्रमन् प्रभुत्वात् ...
... इन्द्रस्य ... सा इति हेतोः ऐन्द्रीं पुरीम् अनुचक्रे अनुकृतवती,
... सर्व्वं स्पष्टमिदं ।

संहतो भूतिसम्पन्ने-
  श्वररस्यो जयान्वितः;
यः सर्व्वमङ्गलाधारो
  विजयानन्दवर्द्धनः
प्रासादः शुशुभे पूर्व्वं
  कैलासाद्रिरिवापरः;
सोऽनुचक्रेऽधुना तस्य
  सञ्चरच्छिव इत्यघोः* ॥ २०,२१ ॥
चिन्ता चिन्ता च सततं
  हृदये जाग्रती स्थिता।
पीयूषवर्षिण्येकासीत्
  अपरा विषवर्षिणी† ॥ २२ ।
.चिन्तासतीत्वमहसा
  परिस्फुटततुः शनिः।

---

* धवल शुभ्र संहत घन भारिवना चानन्दिना पक्षे नान्दीर भावयतेय च प्रमथविशेष संहत व्याप्त भूतिसम्पन्ने श्वररस्य भूत्या सम्पदा सम्पन्न य ईश्वर प्रभु श्रीवत्स महादेवश्च तस्य रम्य मनोहर जयान्वित जय शत्रुजयन जयया सख्यां शिवानुचर्य्या अन्वित शुभ सर्व्वमङ्गलाधार सर्वा मङ्गलानाम सर्व्वमङ्गलाया पार्व्वत्याश्च आधार आश्रयम् विजयानन्दवर्द्धन विजय विजयया च आनन्दवर्द्धन य प्रासाद राजभवनम् अपर कैलासाद्रिरिव शि रागाराय पूर्व्वे शुशुभे, स प्रासाद अधुना चद्दो सञ्चरच्छिव इति सञ्चरन्तो शि वन् [कौ] र्तत्वान प्रगान्ती पार्व्वती च यस्मिन् तादृश इति इति देवौ तस्य कैलास त कैलाससमस्थं अनुचक्रे अनुकृतवान्, अन्यत् साहस्य कापि गतम्।

† एका चिन्ता देवी पीयूषवर्षिणी, अपरा तु शन्या विषवर्षिणी च आसीत्।

अन्तर्देहे सदा देहे
  नृपतेर्लङ्घनाक्षमः ॥ ३३ ।
शनिवज्ज्ञानलब्धुष्टः
  चिन्तयामृतधारया ।
उज्जीवितो यथा भूपो-
  ऽप्युद्यतं समजायत ॥ ३४ ।
चिन्तासतीत्वरूपेण
  तेजसा च नियोजितः ।
शनियापि तथा माता
  छायया स्निग्धतां गतः ॥ ३५ ।
चिन्तायाः सन्निधौ शौरी
  राजन्छायामपि स्वयम् ।
स्प्रष्टुं नाल, तद्वियोगे
  वृद्धिमेवमनूसुषत्* ॥ ३६ ।
जीवामि किम् ? नहि, तथा न कायं भजामि
  जीवन् जनो भजति यत् सुखमत्र लोके ;
नष्टास्मि ? किमहं न लभे निवृत्तिम्
  दुःखानलात् ? गतजनो लभते ध्रुवां याम् ;
मन्ये ततो वपुरिदं खलु नष्टमा सा
  जातानिशं ज्वलदनल्पशिखा चिता हि ;
दूये न तेन ; कथमेवमवेक्ष्य दुःखम्
  नृणां प्रियेऽप्रतिविधेयतयातिघोरम् ॥ ३७,३८ ।

---

* एव वल्लभावस्थाविशेष ।

इतरत् प्रतं प्रसह्य तेऽप्ययमस्मैषां
तव कष्टमोचितुमयं ननु क्षमः ॥ ५ ॥
गृहशोभिनी वस गृहे निरर्थकं
न परिश्रम प्रियतमे ! वने वने ।
जलविच्युतेव नलिनी न जीविता
गमितासि कष्टमबले ! भविष्यसि ॥ ६ ॥
अवरोधनित्यवसतेर्विशोषका-
तपमारुतप्रजुष एव कानने ।
क्षणदाविशोभिविधुबिम्बविभ्रमं
भविता मुखं ग्लपितकान्ति तन्वि ! ते * ॥ ७ ॥
इति भूमिपोऽप्युपदिशन् नृपात्मजां
न निषेद्धुमाप विभुतां तदुद्यमात्
प्रतिरोद्धुमिष्टमधिगन्तुमुत्सुकां
क इहावतीं प्रभवति द्रुतं यतीम् † । ८ ।
तरुमूल एव दधती विलासभू-
मियतां, विलिप्य धियं च धूलिषु ।

---

* हे तन्वि ! अवरोधनित्यवसतेस्तव क्षणदाविशोभिविधुबिम्बविभ्रमं दाविशोभिमानचन्द्रतुल्य मुखं कानने विशोषकातपमारुतप्रजुष एव सदा ग्लपितकान्ति भविता ।

† भूमिप नृपात्मजां इति उपदिशन् अपि तदुद्यमात् तत्तत्समीपगमात् निषेद्धुं निवारयितुं विभुतां सामर्थ्यं नाप न प्राप्तवान् निवारयितुं न प्रयास इत्यर्थः, तथाहि कः कोऽत्र इष्टं पतिं समुद्दिश्यार्थं, अधिगन्तुम् उत्सुकां द्रुतं यतीं गच्छन्तीं इरावतीं नदीमिव प्रतिरोद्धुम् प्रभवति समर्थो भवति ?

परिवारयद्धार्दममलं मृगादिषु
प्रियसंगता नृपसुता वनं ययौ ॥ ९ ॥

अनया जगत्प्रथितरूपसम्पदा
सह तां निशां वनचरैरलक्षित: ।
पतिवाहये कथमिति क्षितीश्वरो
विकलेन्द्रिय: समजनि क्षणं तदा ॥ १० ॥

सुखसाधनव्रतपरैरसंख्यकै:
परिवारिता परिजनैर्गृहेषु या
ससुखं निनाय समयं निरन्तरं
परिलालिता प्रियतमेन शार्ङ्गिना ;
गहनेषु जन्तुभिरतीवभीषणै:
परिवारितेषु च तया समन्तत:
भ्रमतोऽनिशं क्षितिभुज: सचेतसा-
मनुमेयता व्रजति मानसो व्यथा ॥ ११,१२ ॥

न तां विनान्यां भजते कदाप्यसौ
स एव चिन्तामणिरस्य चक्षुषि ।
तमोपहा सैव गृहेषु कौमुदी
तदेव दृष्टेरमृताञ्जनं परम् ॥ १३ ॥

पदे पदे तां मिषत: स्खलद्गतिं
नृपस्य दद्रे हृदयं शुचां भरै: ।
दृशा प्रियायाथ निगूहतो व्यथां
प्रसवता कष्टतराभवत् छलात् ॥ १४ ॥

क्रमेण राजा सह चिन्तया तया
प्रदर्शिताध्वा हिमवह्निरश्मिभिः।
ददर्श मार्गे गतिरोधकारिणीं
तरङ्गिणीं तुङ्गतरङ्गभीषणाम् ॥ १५ ।

इयं नदी सुप्रतरा न चिन्ते !
नौकापि काचित् नच दृश्यतेऽस्याम्।
भयङ्करोऽयं वनभूमिभागः
वामाक्षि ! वामे कुरु दृष्टिपातम् ॥ १६ ।

ज्वलच्चितावह्निशिखाविभासितं
समाश्रयन् क्वचिदेकमामिषम्।
असोढनादोऽखिलपार्श्वजन्तुभिः
शुना गणोऽयं कलहायते मिथः ॥ १७

अकस्मात्कं कर्तुमनाः स्वमामिषं
क्वचित् श्मशानमियाति कश्चन।
अथापरः श्वा द्रुतमेत्य चान्यतः
तदेव भुङ्क्ते सभयं विलोकयन् ॥ १८

क्वचिच्चलत्कौशिकघुत्कृतिश्रुते-
र्भयन् स्वपन्तेव तिरोदधत् शिशुम्।
स्वदेहसंलीनवपुः समाकुलो
निशावसानं करटः प्रतीक्षते ॥ १९ ।

क्वचिच्च कार्शेष्टकिशारप्रभैः
समाचितायां भुवि भीतविग्रहम्

कलध्वनिः श्रोत्रसुखैः कुहूरवैः
कणत्तुलाकोटिरलिव्रजस्वनैः * ।
सुमेखला त्वं कलहंसकालिभिः
किमित्यकाण्डे वद तर्हि रोदिषि ? २४,२५ ।

पतिस्ते विश्वपतिः पतिव्रते !
त्वमेव नित्यं वशवर्त्तिभर्त्तृका ।
अरोदिषि त्वं यदि, किं वदाम्यहो
सतीं वराकीं कृपणन्दिनीमिमाम् ! २६ ।

इति ब्रुवन्तं तमुवाच चिन्ता
कुरुष्व तावत् प्रिय ! दृष्टिपातम् ।
इयं नदी मामुपदिश्य याति
पतिं सदा राघव भूपयेति ॥२७ ।

अलकैर्वृतगण्डमाकुलैः
दधतो वक्त्रसरोरुहं सतो ।
अथ सा प्रतिबोध्य तां नदीं
गदितुं प्राक्रमतैवमादरात् ॥ २८ ।

क्व नु यासि नगेन्द्रसम्भवे !
कलकल्लोलिनि ! भङ्गभङ्गतः† ।
सुरुचिः खलु सा प्रसाधिका
तव यैवं विदधे प्रसाधनम् ॥ २८ ।

---

* कणत्तुलाकोटि —कणन्त्यः शब्दायमानाः तुलाकोटयः नूपुरा यस्याः सा ।
† तरङ्गभङ्गात् ।

शशिबिम्बगतं विराजते
  तव शुभ्रोपलनिन्दितमसि ।
किरणैः शुचिभिः प्रकम्पितैः
  अनुलिप्ता क्व नु यासि सोत्सुका* ? ३० ।
त्वमपि प्रतिगृह्य सादरं
  तदमूलं† पुरतः स्थितं सति !
यदसि प्रियपूजनार्थिनी
  प्रचलोर्मिभिः कुटिलं च मर्षसि ॥ ३१ ।
धिगदः कुसुमं पुरातनं
  पवनाघातविवर्त्तितं शुभे !
नहि योग्यमिदं नगापगे !
  तव भर्तुः, परिगृह्य मुञ्च तत् ॥ ३२ ।
पदमप्यनुगापगेऽर्पितं
  पतितोद्भ्रान्तमधुव्रतां शुचिम् ।
रजसाकलयं प्रयवतो
  रुचिरमन्मथचित्तधारिणीम् ॥ ३३ ।
ननु वेद्मि नगेन्द्रनन्दिनि !
  प्रियमङ्गि तव चित्तमुत्सुकम् ।
न च तत् समयातिपातनं
  सहते त्वाद्यगते ! पतिप्रिये ! ३४ ।
अनुगच्छ वचस्तदपि मे
  तदवाप्तः प्रतिपाद्यतां त्वया ।

---

* [illegible] ।  † तदमूल—पुष्पम् ।

रुचिरां शुचिपुष्पगुम्फितां
द्रुतमानीय ददामि तां स्रजम् ॥ २५ ।

मधुरा मधुलुब्धषट्पदा
मरुता गीतगुणा प्रतिक्षणम् ।
प्रतिभास्यति सा भवत्प्रियो-
रसि चारुस्तनयिन्दुकान्तिनि* ॥ २६ ।

अथवा किमनेन निम्नगे ।
सुममाल्येन† फलं भविष्यति ।
कुसुमं नहि यस्य मञ्जुलं
भवते विद्रुतकान्ति वारिभिः‡ ॥ २७ ।

अयि ! धुनि ! मणिमुक्ताहारयष्टिं गृहाण
प्रियतमवरकण्ठं प्रापयेमां कृपालुः ।
इति निगदितवत्युन्मुच्य सा कन्धरायाः
तृणमिव बहुमूल्यां तां निचिक्षेप तोये ॥ २८ ।

इत्थं प्रमत्तेव नरेन्द्रबाला
मत्वा निषिद्धापि ससम्भ्रमं सा ।
हारं निचिक्षेप च कोपि नौकाम्
आनीय तस्थौ च पुरो निषादः ॥ २९ ।

---

* चारुस्तनयिन्दुकान्तिनि—चारु मनोज्ञ स्तनयिन्दु केश तस्य कान्ति शोभेव कान्तिर्यस्य तत्र वक्षिस्, उरसि इत्यस्य विशेषणम् ।

† सुममाल्येन—सुम कुसुम तस्य माल्य तेन।

‡ यस्य सुममाल्यस्य कुसुम वारिभि विद्रुतकान्ति म्लानसौन्दर्यं सत् मञ्जुलं मनोज्ञम् नहि भवते नाभूदिति। भवतेः प्रार्थ्यर्थकत्वात् पाक्षिकम् आत्मनेपदित्वम् ।

इमां तितीर्षोः पुरतस्तरङ्गिणीं
सहायतां द्राक् सपरिग्रहस्य* मे ।
कुरुष्व तावत् तरणान्तरं नु किम्-
मिति वदाऽऽशय तरिं समानय† ॥ ४० ॥
श्रुत्वा निषादो नृपतेर्वचस्तत्
माराससरामेत्य च विस्मितात्मा ।
"कस्त्वं रजन्यामतिभीषणायां
नारीसमेतो भ्रमसि श्मशाने ? ४१ ।
मन्ये ऽपरस्य दयितामपहृत्य रात्रौ
त्यक्त्वा भयादनुसृतेः‡ शठ ! राजमार्गम् ।
आश्रित्य दुर्गमपथं परिमुक्तशङ्को
लोकैरलक्षितगतिः प्रपलाय्य यासि ॥ ४२ ।
मानवानामगम्येयं
भूमिस्त्वं स्त्रिया सह ।
अत्रागतस्य त्वगेहः
सप्रत्ययः कथं भवेत् ॥ ४३ ।
चिताभस्माचिता शुभ्रा
वैसङ्कोमभुजङ्गमा ।

---

* सपरिग्रहस्य—सपत्नीकस्य ।

† किमिति—किमपि तरणान्तर पारगमनसाधनम् आदाय झटिति वद, कियता भारेण समन्वितं सस्त्रीकं मां नदीपारं नेष्यसि कथय, तरिं नौकां समानय मत्समीपमानय इत्यर्थः ।

‡ अनुसृते अनुसरणात् भवान् मद्भया कदाचित् कश्चित् मां दिवा एवं अनुसरेत् इति भयेन इत्यर्थः ।

इत्येवं वादिनस्तस्य
   चिन्ताचिष्य वचस्ततः ।
उवाच स यथा राज्ञो
   ब्रवीति हि कृतागसम् ॥ ४८ ।

"अनात्मवेदिन् रे जाल्म !
   विरमातिप्रसङ्गतः
यद्येवं वदतो मूढ़ !
   तव पादः कलेवरम्
एतावतापि कालेन
   न प्रयाति कबन्धताम् ;
सोऽयं प्रागदेशनृपतिः
   श्रीवत्सः श्रीप्रियः सदा
चित्रसेनसुता चास्य
   चिन्तास्य सहधर्म्मिणी ॥" ४९,५० ।

"स राजा विक्रवेतालः
   इति सर्व्वत्र विश्रुतिः
कथमेवमवस्थोऽसौ ?
   न मे प्रत्येति मानसम् ॥" ५१ ।

"विना दोषं विरूपेण
   शनिना च नृपोत्तमः ।
सर्व्वलोकोऽसौ शोचनीया-
   मीदृशा गमितो दशाम् ॥" ५२ ।

"विना दोषं कथं देवः
राज्ञेऽस्मै देवि ! कुप्यति ?
एवंवृत्तः कथं वासो
देवलोके वसन् सदा ?" ५३ ।

"प्रकृतिं दुस्त्यजां विद्धि,
न केनापि तदन्यथा ।
पूते जले वसन् मत्स्यो
विस्रगन्धं न मुञ्चति ॥" ५४ ।

स उत्तीर्य्य ततस्तीरं
विनयात् नृपमब्रवीत् ।
नोभे वस्तूनि नौका मे
धारयितुं नृप ! क्षमा ॥ ५५ ।

राज्ञीकक्षगतां कन्थां
कायमुत्तारयाम्यहम् ।
कियद्वारामिमां देवि !
देहि पश्यामि मानतः ॥ ५६ ।

समादाय च तां हर्षोत्-
फुल्लनेत्रोऽभवत् तदा
कन्थेयं रत्नपूर्णा मे
दिष्ट्या हस्तं समागता
तिष्ठ राजन् साधयामि
प्राप्यं प्राप्नोस्मि यत्नतः ॥ ५७ ।

स्वराश्रिमपहृत्य दस्युवत्

क्व प्रयासि मम पश्यतोऽधम !

रुचिवानिति शनिं बलादसौ

उत्पतन्तमवरुद्य पादयोः ;

क्षेप्तुकाम इभविक्रमः क्षितौ

विस्मितः क्षितिपतिर्व्यलोकयत् ।

सौरिमास्थिततनुं नभःस्थितं,

ता नदीं न, न तरिं, न तद्वनम् ॥ ५८ ।

क्व सा लक्ष्मी याता शशधरकुलाङ्गार ! नृपशो !

सभायां मत्तोऽवोद्यधदतिचलां यामपशुयाम्* ।

शिरस्येवं ते, ते शनिरशनिरेष प्रतिदिनं

पतंस्तोत्राघातं व्यथयति पुरा† विद्धि मद्विधि ॥ ५९ ।

सश्लोकं नृपमित्युक्त्वा

सौरिरुद्वैरितेक्षणम् ।

सासूयं चिन्तया दृष्टः

तत्रैवान्तरधीयत ॥ ६० ।

इति श्रीश्रीवत्सचरिते महाकाव्ये कन्यापहरणो नाम

सप्तमः सर्गः ।

---

* मवानाव पशु. । † व्यथयति पुरा— व्यथःश्रयति ।

## अष्टमः सर्गः ।

---

व्यपेतकन्या गतहारयष्टि-
चिन्ता न चिन्तामगमत्, ततोऽसौ ।
तथाविधाभो रविसूनुवाग्भि
र्विपक्षचित्तं पतिमित्युवाच ॥ १ ।

गुणैः शतेनाम्बुधिजा प्रभावे
धनेश्वरं नाथ ! रमातिशेते ।
तत् त्वन्मुखाम्भोजसमीरितं तत्
वचोऽमृतं संस्मर, धैर्य्यमाप्नुहि ॥ २ ।

त्वयी विपत्सम्यनिवर्त्ति भद्रं
भवत्यल दर्शयितुं न वासौ ।
गुणेषु शान्त्यादिषु तेषु तेषु
प्रेमेति मन्ये व्यसनं तवैतत् ॥ ३ ।

तद्धैर्य्यमास्थाय परां विपत्ति-
मुत्तीर्य्य सम्यक् प्रकटीकुरुष्व ।
तदात्मवत्त्वं, ननु येन लोको
मृतोपि लोकेऽमृतवत् बभूव ॥ ४ ।

त्वत्पाय मन्ये ननु सूर्य्यसूनुं
तस्यां मयि त्वत्पुरतः स्थितायाम् ।

न शक्तिरस्याक्रमितुं कदा ते
छायामपि प्राप्तवतोपि बन्धुम् ॥ ५ ॥

इत्थं तया दीपितचित्तवृत्ति-
र्नृपः स्मृतश्रीवचनैस्तदानीम् ।
विश्रान्तमार्गैः पथिकान् सदारो
हृष्टस्ततः श्रीतिपुरं प्रतस्थे ॥ ६ ॥

प्रौढत्वमागात् क्रमशो दिनश्रीः
अध्वश्रमेणातपबाधया च ।
चिन्तां परिक्रान्ततरां विलोक्य
जगाद सर्वोपहतः प्रयासम् ॥ ७ ॥

घर्मांशुरेषोऽम्बरमध्यवर्त्ती
ललाटमुच्चैस्तपति प्रचण्डैः ।
दहे जयत्येव नितान्ततप्तः
पादाब्जमेतौ मम राजमार्गः ॥ ८ ॥

छायापि मन्ये नहि सोढुमीशा
प्रचण्डतापं, कथमन्यथासौ ।
संकोचमापाद्य शरीरयष्टिं
प्रलीयते पादतलेऽध्वगानाम् ॥ ९ ॥

घर्मार्द्रकायः परिदूनपादो
यदेष भारं व्रजति प्रयासात् ।
किमेष भारो मम भारदिग्धो
पथि प्रियेऽस्मिन् कुरु कर्णपातम् ॥ १० ॥

आत्मदेहमिव वोढुमनीशा
शुक्लरूक्षचिकुरा सुतधर्म्या ।
आतपक्लमविवर्णमुखश्रीः
मत्कृते भ्रमति घोरनिदाघे ॥ २० ।

पवित्रशीला सुगृहीतनाम्नी
सदा सदाचाररता कुलीना ।
साध्वीगुणाढ्या गृहकर्मदक्षा
प्रियंवदा निर्मलचित्तभावा ;
लज्जाविभूषा कमनीयमूर्त्तिः
मन्दस्मितव्यञ्जितशारदेन्दुः ;
सदा शरण्या शरणं गताना
भृत्येषु दाक्षिण्यवती निकामम् ;
परोपकाराध्वरदीक्षितेव
भाग्येष्वनुत्सेकवती विनम्रा
यात्मन्यभिष्टेऽवरजेऽनुरूपं
भक्तिं प्रतीक्ष्येषु समेषु सख्यम्
नित्यं दधाना ; सदने चरन्ती
यालक्ष्यत प्राक् गृहदेवतेव
अधन्यताया मम सैवमेव
दुःखायते धिक् न तथापि दीर्ये ॥ २१—२४ ।

इत्येवमन्धश्च विचिन्तयन् सः
श्रामो निकामं क्षुधया तृषा च

कियन्तमध्वानमतीत्य पक्ता
चिवध्वज नाम वनं विवेश ॥ २५ ॥
प्रान्तेषु वानीरवनेन नद्धं
क्रीड़द्विहङ्गं रमणीयमेकम् ।
दृष्ट्वा सरः प्राक् मुमुदे नृपोऽसौ
पश्चात् विषण्णः स्मृतसौरिमायः* ॥ २६ ॥
प्रिया प्रविष्टामनुसृत्य राजा
सस्नौ विगाढ़ः सरसीं यगाढ़ा ।
कृताह्निको भक्तिरसार्द्रचेताः
इष्टं यथावत् समपूजयच्च ॥ २७ ॥
क्षुधः प्रतीकारमसौ सदारः
कृत्वा फलैस्तत्र सुखेन लब्धैः ।
जलं कपोतत्वं† निपीय दृप्तः
क्षणं विशश्राम विशन् निकुञ्जम् ॥ २८ ॥
ततो दिदृक्षुः सुषमां‡ वनस्य
नृपः सदारः परितश्चचार ।
क्वचित् वसन्तेन मनोज्ञदर्शां
दृष्ट्वा च भूमिं स्थितवान् विमुग्धः ॥ २९ ॥
शनिकृतामविपद्यमनोहरं
नरपतिः परिहर्त्तुमनास्ततः ।

---

* एतत् रम्य सरोऽपि शनिमायया कृतं न वास्तवम् इति चिन्तया दुःखितोऽभूत् ।
† कपोतस्य वा पिपासायाम्. पीत्वा । कपोतवर्णं अच्छ इत्यर्थः ।
‡ परमां शोभाम् ।

मधुभवां सुषमां परिदर्शयन्
प्रियतमां विकला समबोधयत् ॥ २० ।

विकचपङ्कजसौरभलोलुप-
भ्रमरसंहतिगीतगुणस्तुतिम् ।
रुचिरपल्लवसंवृतविग्रहां
वनततिं नु विलोकय वल्लभे ! ॥ २१ ।

सहृदयभर्तृसमागमनिर्वृता
स्वतनयामवलोक्य वनस्थलीम् ।
प्रकृतिराकुलतां जहती मुदा
वितनुते विशदं मुखमण्डलम्* ॥ २२ ।

प्रकृतिमेवमवेक्ष्य हसन्मुखीं
पिककुलं मधुरं शृणु गायति ।
मलयमारुतशिक्षितविभ्रमा
सुललितं व्रततिः प्रिये† नृत्यति ॥ २३ ।

मदकलः कुसुमेषु च लम्बते
मधु निपीय हतं मधुपान्वयः ।
प्रमुदिते ननु भर्त्तरि जायते
परिजने सुखभुक्तिरयन्त्रिता ॥ २४ ।

कमलनालनिबद्धपदस्वसन्
विधुतपक्षतिराकुलनिस्वनः ।

---

* प्रकृतिः स्वतनयां वनस्थलीं सहृद्भर्तृसमागमनिर्वृताम् अवलोक्य मुदा हर्षेण व्याकुलतां शिशिरकालकृतम् अनुभवाख्यं जहती त्यजन्ती विशदं स्वच्छं सुखं महार्घं वितनुते प्रकटयति। मुखमण्डलं वदनमण्डलं दिङ्मण्डलं च।

† प्रिये—हे प्रिये त्वं पश्य।

विमनसा प्रियया विसभच्चणात्
विरतया मिलितः कलहंसकः ॥ २५ ॥

उपचितायतिरेष रविः पुनः
समधिकद्युतिरम्बुजिनीसखः ।
इह भवे यदि कस्य न पद्मिनी-
शुभसमागतिरभ्युदयाय वा * ॥ २६ ॥

कमलिनि ! त्वहते शिशिरे सति ।
व्रजति कामपि दीनदशां रविः ।
तदतियुक्तमनेन विना विधौ
यदपि सोढुमलं नहि दीधितिम् † ॥ २७ ॥

समभिवीक्ष्य रविं करलालितः
प्रमुदितं विधुरप्यतिशोभते ।
कृतमहोपकृतिर्हि महोदये
भवति हर्षभरः कृतवेदिनाम् ‡ ॥ २८ ॥

---

* स शिशिरे पद्मिनीविरहात् अस्मासु निस्तेजाः अभवत्, स एव रविः अम्बुजिनीसखः पद्मिनीसंगतः पुनः उपचितायतिः वर्धितायुः समधिकद्युतिश्च जातः । तथाहि इह भवे पद्मिनीशुभसमागतिः तादृश्याः नायिकायाः शुभः सङ्गः वा अभ्युदयाय उत्कर्षवृद्धये न भवति । शिशिरे पद्मिन्या अभावात् रवेः तादृशी दीनावस्था, वसन्ते तत्समागमात् अभ्युदयः । पद्मिनीजातीया स्त्री प्रख्याता नायिका च ।

† हे सखि ! कमलिनि ! शिशिरे रविः त्वहते त्वया विरहितः कामपि अनिर्वाच्यां दीनदशां व्रजति, तत् अनेन रविणा विना यत् विधौ चन्द्रः दीधितिं सोढुं अलं समर्थो न अभि इति यत् तत् अतियुक्तम् एतादृशम् एव विरहे स्त्रियाः कर पतिव्रतायाः अवस्था एव ।

‡ वसन्ते चन्द्रस्यापि शोभा समधिका इति भावार्थः । रवेः करलालितः

मलयगोत्रभवो मधुसंगमात्
कुसुमितामपि चूतलतां मरुत् ।
स्पृशति चेत् नु कथं करटैः समं
गतवयाः पिक एव न माद्यति ॥ ३९ ॥

शिखरनियमलीनमधुव्रता
नवरसालमनोहरमञ्जरी ।
इषुरिव प्रतिभाति च धन्विनो
निशिततीव्रशिलीभयदानना* ॥ ४० ॥

क्रकचदन्तुरमुग्रविलोकनं
भ्रमयता वकुल नभसि क्षणम् ।
विदधता ननु कोपविनिःसृतं
कुरवक मधुना प्रतिभायते ॥ ४१ ॥

इत्थं वसन्तसुषमामवलोकयन्तीं
निद्राभिलोलनयना दयिता समीक्ष्य ।
राजा द्रुतं रचितपर्णकुटीरमेकम्
आस्तीर्णपल्लवशयन विधुतां निनाय ॥ ४२ ॥

इति श्रीश्रीवत्सचरिते महाकाव्ये चित्रध्वजयनाभिगमनो नाम अष्टमः सर्गः ।

---

करपालित विधुराप चन्द्रोपि न रविं प्रसादतम् आभवोस्य इरा वातमीभत आतानन्दः भाखनभाव बहाति, कमलोदयो ब्रवकानां कमलदीपकतेः जनक महोदधेः, अहो दर्पभर दर्पातिरेक भवल्लंर्रविकरपालितचन्द्र क्रतम. चतस्र दपकारिव सूत्य अभ्युदये दर्पातिरेक. युक्त एव इति भावः ।

* निशितया तीव्रया श्रोत्या भयदम् आननं यस्याः सादृशी ।

# नवमः सर्गः ।

गायद्भिराश्रितमहीरुहरम्यशाखैः
सूतात्मजैरिव खगैः प्रतिबोध्यमानः ।
पूर्व्वाद्रिमुन्नयनो नृपतिर्विपश्चो
द्रष्टुं समारभत राजसुतां प्रयाताम् ॥ १ ॥

किञ्चिच्च्युतं कनकपुष्पविशोभिमध्यं
कृष्णं भुजङ्गमिव कुण्डलितं सरलम्
सीमन्तित रुचिरबन्धविशेषरम्यं
धम्मिल्लमीषदिव* विप्लुतभङ्गिभावम् ;
स्वेदोदबिन्दुनिचये र्निचित ललाटं
हीराङ्कुरैरिव लसत् कलधौतपट्टम्
अर्द्धस्फुटाचलशिलीमुखपद्मसुग्धम्
आमीलितं स्थिरकनीनिकमक्षियुग्मम् ;
बिम्बाधरं श्वसितवेगविकम्प्यमानं
सञ्जातलास्यमिव पल्लवमत्युदारम्
गण्डद्वयञ्च दधतों परिपाकपाण्डु
चूतं रसार्द्रमिव,सच्छलदच्छकान्ति ;
निष्यूतहीरकसमुज्ज्वलकान्तिपुञ्ज-
ग्रैवेयकेण नितरां प्रतिभिन्नशोभम्
ईषत् विवर्त्त्यं वलिमत् कमनीयकण्ठम्
आलानबन्धनमिवेन्द्रणवारणस्य ;

---

* धम्मिल्ल—कबरीम

वामेतरं वलयरत्नमरीचिभासा
　हस्तं समुद्गतसुरायुधमम्बुजाभम्
भाले निवेश्य शयितां श्लथलम्बपातं
　सव्यं निपात्य शयनेऽर्द्धहताङ्गयष्टिम् ;
या वल्लभां नृपवरः प्रथमं प्रबुद्धः
　दृष्ट्वा पुरा समभवत् परितृप्तदृष्टिः
तामद्य भूमिपतितामकृताङ्गरागा
　दद्रे नृपस्य निपतो* हृदयं सरागम् ॥ २—७
कान्ते ! मदर्थपरिमुक्तसुखोपभोगे !
　प्रोन्मीलयेक्षणयुगं रजनी प्रभाता ।
इत्यश्रुदिग्धनयन सदय प्रियाङ्गम्
　आपादपद्ममसकृत् स पराममर्श† ॥ ८ ।
जृम्भाविकस्वरमुख नृपपाणिसङ्गात्
　गात्रं विभेद कृतकुञ्चनसम्प्रसारम् ।
आकूणितेन नयनेन च वल्लभास्य
　सस्तम्भितेव दयिता क्षणमैक्षतासौ ॥ ९ ।
जातस्मृतिर्मुखरभूषणमूर्द्धबाहुः
　स्मेरानना झटिति पार्श्वविवर्त्तमागात् ।
मन्ये रुवन्मधुकरं नलिनी सरम्याम्
　अन्या दिशामभिपतत्यनिलाहताङ्गी ॥ १० ।
पूर्व्वाङ्घ्रिमुक्तशयना परिवर्त्य कण्ठम्
　आभुग्ननालनलिनप्रतिमास्यबिम्बा ।

* निपत—पश्यतः ।　　† पराममर्श—पस्पर्श ।

पर्य्यंसुषो नरपते र्नयने विलोक्य
पप्रच्छ कारणमिय कदितस्य चिन्ता ॥ ११ ।
हेतुं शुचो दयितया परिपृच्छ्यमानो
राजाब्रवीत् प्रियतमे ! कथयामि किं ते ।
जाने शनिर्भ्रुकुटिभङ्गकरालवक्त्रो
मामेवमम्बरगतो निजगाद सूत्तम् ॥ १२ ।
स्योवत्सभूपतिरतीवविचारदक्षः
पक्षाश्रयित्वमपहाय विनिन्द्यमेवः ।
मीमांसते स्तुतिपरायण इत्यवेक्ष्य
त्वय्येव बर्ब्बर ! गतो ननु तिष्ठमानः* ॥ १३ ।
आसीत् तदा सरसि नौ अधिकृत्य शृङ्गम्†
लक्ष्म्या य मे च कलह' क्रमवर्द्धमानः ।
वित्ताधिदेवतमिति प्रकृत व्युदस्य
मत्त. श्रिय छलपर' समवोद्वधस्त्वमङ्क‡ ॥ १४ ।
मत्तोऽधिका यदि रमा चपलाचिराभा
वैधेय ! कि तत इयं चमते न मत्तः
धातु भवन्तमपराज्यमपास्तशक्ति
भ्राम्यन्तमेवमधुना महियोद्वितीयम् ? १५ ।
त्रेतायुगे जलधिजा जनकात्मजाभूत्,
सा मत्प्रभावपिहितात्ममहानुभावा

---

* निर्देष्टत्वेन लाम् आयितवानस्मि , विहतोऽसंचयाय चाप्तनैयदम्।

† प्राधान्यम् ।   ‡ बाहुबचनाम ।

नक्तंचरीभिरनिशं परितुद्यमाना
रक्षोगृहे चिरमतिष्ठदशोकवन्याम्* ॥ १६ ॥

सन्दीप्य भद्र ! यमसौ जगतां त्रयाणां
नाथो बलिर्विगतवैभववित्तराज्यः ।
जातौ, गतश्च खरभानुसुधांशुशून्यं
नक्तंदिवं परिहृतं तमसाद्य लोकम्† ॥ १७ ॥

सत्त्वेषु सत्त्वरहितेष्वपि का कथा वा
विष्णुः स्वयं हरविरिञ्चिसमर्चिताङ्घ्रिः ।
उद्दीपयन् मम कथं नु बभूव कीट-
यक्षं चकर्त च गिरौ चनिकृष्यमाणः ॥ १८ ॥

लक्ष्मीस्तदा कमलकरादुपकारमस्य
भर्तुस्तया गतवती विषमां विपत्तिम् ।
यत्तु न याञ्चकटाक्षः उपकर्तुमस्य
सा किं करोतु भवती वद रे वराकी ॥ १९ ॥

चिन्तामणिर्हरिरयं, ननु तत्समर्थं
कोटागुता त्रिजगतः प्रभुता च तुल्या ।
चक्रस्य कर्तनमथो जगतः स्थितिर्वा
तत्प्रीतये भवति नाथ विकल्प§ ईदृक् ॥ २० ॥

किन्त्वेष तादृगगति यदवाप विष्णुः
त्वन्मानवर्द्धनमवेहि नु तद्विदानम् ।

---

* [illegible] ।  † [illegible] ।

‡ [illegible] ।  § [illegible] ।

एवं यदि, त्रिभुवनेश्वरमानितं त्वं
केनेरितः कथय मां कृतवान् विमान्यम्? २१ ।
तत् श्रूयतां यदचिरेण करिष्यते ते
क्रुद्धेन सूर्य्यतनयेन विमानितेन ।
यस्या बलात् बहुक्षणं* ननु मन्यसे मां
सङ्गं तया विघटयामि हि चिन्तया ते ॥ २२ ।
विच्छेदमाशु विरचय्य परानुरक्तां
कुर्य्यास्तु तां, यदि न कर्त्तुमलं भवेयम् ।
ज्योतिर्विदो न गणयन्त्वपशक्तिकं माम्
अन्यं ग्रहम्, ग्रहगणेषु वदन्तु नीचम् ॥ २३ ।
छाया प्रसूः प्रसवकष्टकरं परं मां
सम्भावयत्वविरलाश्रुमुखी, पिता मे ।
पुत्राय मुञ्चतु पिता सहयालुतां, यत्
ईदृक्क्रियः शनिरिति त्यजतु स्वधाम† ॥ २४ ।
इत्यमातर्जयन् सौरि-
र्निर्दहन्निव मां दृशा ।
अन्तर्दधे, सान्त्वनार्थं
निद्रायानुपदं गतः ॥ ३५ ।
इत्युक्त्वा नृपतिर्मोहा-
वेशसंमीलितेक्षणः ।

---

* ईषदूनं दधासि बहुक्षणं, क्षणवदपकृष्टमित्यर्थः ।

† पिता पुत्राय सहयालुतां मुञ्चतु, यत् यस्मात् शनि ईदृक्क्रियः इति मत्वा मे पिता सूर्यः स्वधाम त्यजतु इत्यन्वयः ।

आभुग्नकण्ठनालश्च
पतन्नेव तया धृतः ॥ २६ ॥
सा चैनमवदत् स्वैर-
मंसस्थापितकन्धरम् ।
परामृशन्ती हस्तेन
मृदुना मञ्जुभाषिणी ॥ २७ ॥

कार्येण विज्ञापयितुं
शक्तिमशक्तो गिरा प्रकटयति यत् ।
तत् जल्पतु शनिरनिशम्
चिन्तार्थे चिन्तयास्तु ते ॥ २८ ॥
तव चिन्ता खलु तादृक्
योषेति गणय नृपवर ! न कदाचित् ।
अनुरागो ननु यस्याः
स्थिरतामिति न प्रतीकोयत् ॥ २९ ॥
वासात् अन्यं वासं
स इवाश्रयति पुरुषान्तरं स सदा ।
आश्रयमेति कदाचित्
निपतति च निराश्रयो वायौ ॥ ३० ॥
सुरभौ च यथा व्रतति-
स्तरुमेकं धृतवती प्रशाखाभिः ।
आकर्षति समुपस्तः
तरुमथ गुल्ममपरं सहसा ॥ ३१ ॥

नैतादृक् तव चिन्ता,
नैषा वा धावतोच्चणाकृष्टा,
पुरुषान्तरमाकर्ष्टुं
न कदा गणयति निजां शक्तिम् ॥ २२ ।

चित्तं मदीयमेतत्
नूनं लौहमयधरणिधरवर्य्यः ।
आकृष्टये तदस्या-
यस्कान्तो*मणिरणुर्नालम् ॥ २३ ।

रविसूनोः प्रातिकूल्यात्
राक्षसीभिः प्रपीड़िता ।
कामं निकामदुःखार्त्ता
बभूव जनकात्मजा ॥ २४ ।
किन्तु तस्याः किमकरोत्
शनिकोटौ लसत्त्विषः ।
सतीत्वनाम्नो रत्नस्य
जानक्या मनुजेश्वर ! २५ ।
त्रिलोक्या आधिपत्यस्य
निष्क्रयेण दशाननः ।
प्रविचालयितुं शेके
किं नु तस्याः स्थिरं मनः ? २६ ।
दमयन्त्याः किमकरोत्
प्रतिकूलः कलिश्च वा

* अयस्कान्त मणि—चौहाकर्षकप्रस्तरविशेष ।

वर्ण्यते चरितं तस्याः
श्रवणाञ्जलिना पिव ॥ ३७ ॥

प्रियया सह भ्रमत एव कानने
निषधाधिपस्य फलमूलसश्नतः ।
द्वधिका दशाल्पगुरवः समाः क्रमात्
समयः समागमदसौ च दुष्करः ॥ ३८ ॥

अनया विमोहनशरीरशोभया
सह वत्स्यर जनगणैरलक्षितः ।
अतिवाहये कथमिति चितीश्वरो
विकलेन्द्रियः समजनि क्षणं तदा ॥ ३९ ॥

विपिने प्रिया त्यजत एव मे शुभम्
कथमन्यथा समयपालनं भवेत् ।
इति चिन्तयन् नरपतिर्विचुक्षुभे
शतकोटिभिः हतगिरा इव क्षपन् ॥ ४० ॥

अथैकदा सा विनिवेश्य मस्तकं
प्रियस्य बाहौ स्वपिति स्म सस्तुते ।
चिरेण लब्धावसरः चितीश्वरः
स तां विहातुं चकमे तथाविधाम् ॥ ४१ ॥

स बाहुमाकृष्य शनैः शिरोधरां
निधाय भूमौ उदतिष्ठदाकुलः ।
पदानि धीरः कतिचित् व्रजन् ततः
न्यवर्त्तत द्राक् विपदं विचिन्तयन् ॥ ४२ ॥

---

* [illegible]

न वेत्ति चान्यां नृपतिस्तया विना
　कथं नु तां मोक्ष्यति भीषणे वने ।
उदयुनेत्रो विकलेन्द्रियः पुनः
　प्रियेकपार्श्वे समुपाविशत् शनैः ॥ ४२ ।

क्लमाप्लुतं श्यामिकया ततस्तु तत्
　कलङ्करेखाङ्कितचन्द्रसुन्दरम्
परिस्फुरद्बिम्बनिभाधरं चलन्-
　मधुव्रतव्रातसमाकुलालकम् ;
क्षणं विकुञ्चच्चतुरभ्रु साध्वसात्
　क्षणं स्मितस्नातरदच्छदं मुदा
प्रतिक्षणं वर्द्धितदर्शनक्षणं
　ददर्श कान्तावदनं स नैषधः * ॥ ४४, ४५ ।

न मां वने मुञ्च नृशंसजन्तुभिः
　समाकुले नाथ ! निराश्रयामिमाम् ।
इतीरितं द्राक् प्रियया वचस्तया
　निशम्य राज्ञो हृदयेन कम्पितम् ॥ ४६ ।

समुल्ललासे च समीक्ष्य वल्लभां
　पुरेव सुप्तामपबोधलक्षणाम् ।

* ततः स नैषधः नल श्यामिकया क्लमाप्लुतम् अतएव कलङ्करेखाङ्कितचन्द्रसुन्दरं परिस्फुरद्बिम्बनिभाधरं चलन्मधुव्रतव्रातसमाकुलालकं मधुव्रतव्रातेन भ्रमरसमूहेन समा, तुल्या आकुलाश्च अलकाश्चूर्णकुन्तला यस्मिन् तत् तथोक्तं क्षणं साध्वसात् विकुञ्चच्चतुरभ्रु भयेन क्षणं विकुञ्चन्त्यौ चतुरे भ्रुवौ यस्मिन्, तादृशं क्षणं मुदा स्मितस्नातरदच्छदं प्रतिक्षणं वर्द्धितदर्शनक्षणं क्षणे क्षणे वर्द्धितः दर्शनस्य क्षणः उत्सवो येन तादृशं तत् कान्तावदनं दमयन्तीमुखं ददर्श ।

अथायमाहूय दिगीश्वरान् स्वगान्
समीरणं भूधरमेवमादिशत् ॥ ४७ ।

अयं नृशंसोऽशरणां पतिव्रताम्
इमां वने मुञ्चति कार्य्यगौरवात् ।
भवद्भिरार्यैः परिरक्ष्यतामियं
विपन्नरक्षा हि सतां कुलव्रतम् ॥ ४८ ।

इतीरयित्वा नृपतौ विहाय तां
गते गलद्धैर्य्यमुदश्रुलोचने ।
वनाधिदेवो चकिता स्खलद्गतिः
समेत्य हस्तेन तदङ्गमस्पृशत् ॥ ४९ ।

व्यपेतनिद्रा परितो नलप्रिया
प्रियं दिदृक्षुः प्रजिघाय चक्षुषी ।
अपूर्णकामापि तथाविधा क्षणं
निनाय नालम्बनिराशमानसा ॥ ५० ।

ममत्वम्, भूनिहितं स्वकं शिरो
गतस्य पत्युश्च विरायमाणता ।
समुत्सुकं तत्पथदत्तचक्षुषे
अशंसुरस्यै सकलं स्फुटाक्षरम् ॥ ५१ ।

ततः समुत्थाय ससम्भ्रमं सती
विकीर्णकेशा च विशृङ्खलाम्बरा ।
त्रसत्कुरङ्गीव वनेऽन्वितस्ततो
विचेतुमीशं विकला प्रचक्रमे ॥ ५२ ।

गुहासु कुञ्जेषु सरित्तटेषु च
   प्रियं प्रनष्टं रुदती विचिन्वती ।
यदा क्वचित् तं न ददर्श विह्वला
   तदापतत् भूमितले नृपात्मजा ॥ ५३ ।

अयत्नलब्धप्रतिबोधसुस्थिता
   पुरी ययौ सा स्थिरलक्ष्यलोचना ।
निशम्य किञ्चिच्चकिता परागता
   पुनर्व्यचेषीत् खलु तेषु तेषु च ॥ ५४ ।

अशब्दनिक्षेपपदं परागतः
   प्रसार्य्य हस्तौ स्फुटपङ्कजोपमौ ।
पिधेहि नेत्रे मम पृष्ठतः स्थितः
   समेहि नाथेति जगाद कातरा ॥ ५५ ।

अथो भुजङ्गो यमवाड्भीमः
   कालिप्रयुक्ता विवृतास्य एक ।
अदुद्रुवत् हा भयकातराञ्चोम्
   मुक्तार्त्तनादां नृपनन्दिनीं ताम् ॥ ५६ ।

व्याधोऽन्वसा तत्र समेत्य कश्चित्
   भुजङ्गम तं निजघान घोरम् ।
रक्षस्तु तस्मात् यदसौ विधातुम्
   इयेष तत् सर्पगतं न कुर्यात् ॥ ५७ ।

न तं यदा वारयितुं
   क्षमा साभूत् दमस्वसा ।

तदा सतीत्वरक्षार्थं
सतीं तुष्टाव कातरा ॥ ५८

मातर्मातरयं व्याधो
मुष्णत्यन्ना करोति माम्।
एहि त्राणाय पुत्र्यास्ते
रक्ष मां दक्षनन्दिनि* ॥ ५९ ।

अरण्ये शरण्ये! विपन्नां विहस्ता-
मनाथां निषादो बलाद्धन्ति मातः।
त्वदन्या न काचित् परित्राणमोघा
गतिस्त्वं गतिस्त्वं गतिं देहि दुर्गे ॥ ६० ।

अरण्ये विघोरे विपज्जालमग्ना-
मपर्णे! त्रिनेत्रे! त्रिलोकेशि! रक्ष।
महार्घं सतीत्वं हरत्येष मूढो
गतिस्त्वं गतिस्त्वं गतिं देहि दुर्गे ॥ ६१ ।

सहसा नयनात् गिरीन्द्रपुत्र्याः
निरगात् ज्योतिरलं जगत् प्रदग्धुम्।
विदधे विलसत्तडित्सिताभैः
किरणैस्तत्र वनं पिशङ्गवर्णम् ॥ ६२ ।

प्रविशत् नयनं नृपात्मजायाः
विवरैः सङ्किरतो† व्यलोकि तेजः।
युगपत् विदहत् किरातदेहं
घनमारीचमिवातितीव्रवेगम् ॥ ६३ ।

---

* दक्षनन्दिनीम्। † विवरसङ्कि —समस्तरे।

कर्पूरराशाविव तत्र पापे
दग्धे किराते मनुजेशपत्न्याः ।
गात्रे पतन्ती सुरपुष्पवृष्टिः
विलोलरोलम्बकुला* पपात ॥ ६४ ॥

तच्चिन्तयालमवधूय मनोरुजं तां
लक्ष्म्या वचश्च तदनुसर नाथ सर्व्वम् ।
नारायणः कमलया सह मां यदाह
स्वप्ने समाहितमतिः शृणु तत् वदामि ॥ ६५ ॥

सन्तापिताय रविरश्मिभिरेव कामं
छाया जनाय नितरां स्वदते सुशीता ।
प्रह्लादनश्च तिमिरौघनिरुद्धदृष्टेः
दीपोहि, सौख्यपरिहृतय एव दुःखम्† ॥ ६६ ॥

इत्यालोच्य मया चिन्ते ।
जन्मतः सुखिनौ युवाम् ।
अनुभावयितुं दुःखं
सुगृहीतः‡ शनैश्चरः ॥ ६७ ॥

शेषयामे वियामायाः
रमया सह माधवः ।

---

* विलोलं चपलं रोलम्बकुलं भ्रमरसमूहो यस्याम् सा ।

† रविरश्मिभिः कामं सन्तापिताय जनाय सुशीता छाया नितरां स्वदते रोचते एव, दीपो हि तिमिरौघनिरुद्धदृष्टेः प्रह्लादनश्च, दुःखं सौख्यपरिहृतये एव भवति, दुःखानुभवः सुखानुभवं वर्द्धयतीति तात्पर्य्यम् ।

‡ सुगृहीतः—नियुक्तः ।

एवमाख्याय चाश्वास्य
पद्मन्या मे तिरोदधे ॥ ६८ ।
तदेहि मातृस्थिका एते
मत्स्यानाददते सुखम् ।
भिक्षिला कियतो मत्स्यान्
कुर्म्मोऽद्य देहधारणम् ॥ ६९ ।

इति श्रीश्रीवत्सचरिते महाकाव्ये ग्रमिनिर्भर्तृसर्गो नाम नवमः सर्गः ।

## दशमः सर्गः ।

शकुलमेकमवाप्य* नृपस्ततः
प्रियतमामवदत् मुदितः परम् ।
झषमिमं † दह, भक्षयतोऽस्य मे
विरमतु क्षुधया परिबाधनम् ॥ १ ॥

गुरुमुखात् श्रुतवान् शनिवासरे
ऽनलविदग्धमिमं झषमश्नतः ।
प्रशममेति तदुत्थितपीड़नं
तदनलं ज्वलय त्वरितं प्रिये ॥ २ ॥

नृपसुता नृपतेरनुशासनात्
शकुलमत्स्यमसौ व्यदहत् मुदा ।
वायमिवोपनये झषमीदृशं
नृपतये बत भस्मसमावृतम् ॥ ३ ॥

इति विचिन्त्य ययौ नृपभामिनी
सरसि कर्त्तुमनाथ झषोन्मृजाम् ।
सपदि च तत्करतः पुनरुच्छ्वसन्
जलमगात्, अहसत् शनिरम्बरे ॥ ४ ॥

तया हसन्तं शनिमम्बरे स्थितं
विदह्य चिन्तानलगर्भया दृशा ।

---

* शकुल — शोलमाछ इति भाषा ।  † झषम् — मत्स्यम् ।

जगाद किमेवमसाधु चेष्टितं
विकत्थसे यद्यधिकृत्य निर्घृण ! * ॥५॥
शने ! समाहूय नृपो विचक्षणो
विमानितं त्वामकरोत् किमात्मना ?
यदस्तधैर्यो ननु वैरमोचनं
चिकीर्षुरेनं तुदसि प्रतिक्षणम् ? † ६ ।
विचित्रमेतत् दिनभर्त्तुरौरसो
भवादृशोऽभूत् तनयो हि, यः शने !
निरागसं तु स्वगतेः प्रपीडयन्
न लज्जते प्रत्युत तेन हृष्यति ॥ ७ ।
पापग्रहे त्वयि शने ! परिकोपितेऽसौ
जानाति मत्पतिरनिष्टफलं प्रकामम् ।
धर्मं तथापि न जहौ परिवर्जयस्त्वा
लक्ष्म्या समस्तजगतां परिपूजितायाः ॥ ८ ।
पत्युस्तथाविधविचित्रविचारशक्तिः
तादृक् स्वधर्मपरता शुभमोहिनी च ।
पापग्रह पवनवत्स सुदुर्ग्रह त्वां
क्रोधाभिभूतमकरोत्,नैव तोषितः ? धिक् ॥‡॥९॥

---

* किन्तु धनलसमर्थया तथा समरे स्थित तथा इयन्त प्रति विदध्य विरंच। असाधु चेष्टितम् अविकृत्य किं वृत् विकत्थसे एव जगाद।

† हे शने। विचक्षण नृप आत्मना स्वयं त्वां समाहूय किं विमानितम् अकरोत् यत् यस्मात् अस्तधैर्य एव वैरमोचनं चिकीर्षुं प्रतिक्षणं एनं तुदसि पीड्यसि।

‡ पत्युः महत्तं शुभमोहन्यौ तथाविधविचारशक्ति तादृक् स्वधर्मपरता

धत्ते पतिमेम हि येषु न वस्तुबुद्धिं
संसारभावनिवहेषु विनश्वरेषु ।
किञ्चित् चकर्थ कदनं* ननु तेषु तेषु
तेनैव जाल्म ! तव गर्व्वपरलमोट्टक् ॥ १० ।
दग्धः शने ! शकुल एव पुन. श्वसन् यत्
मायाबलेन सलिलं प्रविवेश, तेन ।
कार्य्येण ते क्षतमहीपकृतिर्भवामि
पापं समाचरत एव, नमामि तत् त्वाम्† ॥ ११ ।
योऽयं करः प्रतिदिनं सुरभक्ष्यभक्ष्यं
यस्मै पुरा स्वयमदात् कथमेष तस्मै ।
दग्धं झषं ननु ददात्विति चिन्तया यत्
दुःखं बभूव हृदयच्छिददो निहसन् ॥ १२ ।

तत् तुभ्यं नम इत्युक्त्वा
हसन्ती पत्युरन्तिकम् ।
जगाम सा राजपुत्री
सर्व्वं चास्मै न्यवेदयत् ॥ १३ ।
तस्यास्तत गर्व्वितं वाक्यं
श्रुत्वा शनिरधोमुखः ।

---

पवनवत् सुदुर्यं पापग्रह त्वा आयासिमृतम चकरात् ! तोषित मया ? न तोषित मकरात् ! धिक ।

* कदनम् अपचयम् ।

† पापं अनिष्टं समाचरत एव अनिष्टाचरणे प्रवृत्तस्यैव ते तव तेन कार्य्येण क्षतमहीप्रकृति भवामि, तत त्वां नमामि ।

सतीलतेजसा दग्धो
  म्लानच्छायस्तिरोभवत् ॥ १४ ।

चिन्तावाक्यमुपश्रुत्य
  नृपश्चिन्ताकुलोपि सन् ।
चिन्ताधिवारणायैव
  निराकुल इवाभवत् ॥ १५ ।

कन्दमूलं समाहृत्य
  चोपयुज्य तया सह ।
विश्राम क्षणं राजा
  ततश्चिन्तामवोचत ॥ १६ ।

"मादृशां नयनकोणगोचरः
  सागरोपि मरुभूमिसोदरः ।
आश्रयामि यदि कल्पपादपं
  सोपि याति सहसावकेशिताम्" ॥ १७ ।

अन्नपूर्णा त्रिजगती
  यदान्नं मायायाहरत् ।
अलक्ष्यभिद्यो भगवान्
  तदेत्थं प्रियमब्रवीत् ॥ १८ ।

पश्य कान्ते वनमिदम्
  एकेन शनिमायया ।
कष्टलभ्याहारमद्यो
  दिनेनाजायत प्रिये ॥ १९ ।

कान्ते मुखे नीरजाक्षि !
कच्छ्रैणैतावतापि ते।
अणुमात्र विषादस्य
कथ लक्ष्म न लक्ष्यते ॥ २० ।

एवमुक्ता तु सा चिन्ता
विहस्य पतिमब्रवीत् ।
नास्ति मे विभव: किञ्चित्
विना ते पादपङ्कजम् ;
अविरतं तत् पुरतो
नित्यं नाथ ! विराजते ।
तस्मे कथं विषादः स्यात्
नेष्टेष्टो हि विषीदति ॥ २१ ।

राज्यादिकं बहु धनं
तव नष्ट महीपते !
तेन त्वमीदृशावस्थो
जातोसि ननु वल्लभ ॥ २२ ।

एवमुक्तो महाराजः
सोन्माथ इव चाब्रवीत् ।
कान्ते कान्ते भवत्येव
मेवमुक्तं स्फुटाक्षरम्॥ २३ ।
मम हि त्वन्मुखाम्भोजात्
अधिकास्था धनादिषु ।

कष्टमेवं वाध्यमानं
त्वद्वचो बाधतेतराम् ॥ २४ ।

एवं नृपवचः श्रुत्वा
चिन्ता त प्रत्यबोधयत्,
सम्मुख तव सर्व्वस्व
त्वतपदञ्च तथा मम,
यद्येव तर्हि का चिन्ता
शनिना नो हृत नु किम् ?
वर्त्तावहे सम्मुखोमेरो
यदावां नाथ सङ्गतौ ॥ २५ ।

एतत् स्थानं परित्यज्य
गमिष्यावः परेद्यवि ।
यत्र सौरिपिता सूर्य्यो
यात्यस्तं सङ्गते करे ॥ २६ ।

सवनितेषु हि पतत्सु सपतन् ,
तस्माद्धे शिरसेव विद्धतः
सतसङ्कटस्रधारया
परिनिमस्तपनो विनीयते ॥ २७ ।

प्रकृतिः कृपया समागता
रुधिरस्रावनिरोधवाञ्छया ।
जनदम्बलनीनवाससा
हतमद्दे निदधाति त द्रुतम् ॥ २८ ।

तदुपान्तगलद्गभस्तिभिः *
द्रुतचामीकरभास्वरैः † क्षणम् ।
अनुरञ्जितवीचिरास्फुर-
च्चपलेव प्रिय ! सिन्धुरीक्ष्यते ॥ २८ ।

असितारुणमम्बरञ्च तत्
दिवि कीदृक् ननु पश्य शोभते
क्षणमम्बुनिधेर्जलं यथा
हरकण्ठद्युतिजित् सविद्रुमम् ; ‡
स्फुटकोकनदाकुला क्वचं
क्षितिसेवालततिर्यथा जले;
परिपूर्ण इव क्वचं जवा-
गिरिकर्णीकुसुमैः करण्डकः§ ;
हरितैररुणैः फलैः क्वचं
निचितः प्लक्ष इव ; क्वचं विलात्

---

* तस्य तटस्य उपान्तेषु गगनस्य समस्तस्य विस्तारैः।

† द्रुतं गलितं यत् चामीकरं सुवर्णं तद्वत् भास्वरैः।

‡ असितारुणं तत् अम्बरं वस्त्रम् आकाशञ्च हरकण्ठद्युतिजित् अर्थात् कृष्णं सविद्रुमम् विद्रुमलताखचितम् अम्बुनिधेः समुद्रस्य जलं यथा तथैव दिवि कीदृक् शोभते पश्य।

§ क्वचं स्फुटकोकनदाकुला प्रस्फुटितपद्ममालापरिव्याप्ता क्षितिः श्यामशैवालराजिर्यथा जलशैवालराजिरिव क्वच शोभते। जवागिरिकर्णीकुसुमैः जवा, कर्णाकुसुमैः श्वेतापराजितापुष्पेश्च पूर्णः क्वाच करण्डकं पुष्पभाजनमिव शोभते।

स्फुरदुग्रशिखेव धूमिते-
ष्टकराजिर्ज्वलदग्निका निशि * ;
क्षणमेणदृशां घनद्युतिः
कबरीबन्ध इवातिरम्यया
अरुणैः कपिशैश्च पाटलैः
कुसुमैर्गुम्फितया स्रजान्वितः † ;
घनभावमुपेयुषा क्वचित्
परिशुष्केव नितान्तधूसला
वहता तरलेन च क्वचित्
रुधिरेणाम्रनिपुष्पशोणताम् ;
धवला क्वचिदिन्दुरोचिषा
हरिता शाद्वलविनिन्दिना क्वचित्
अरुणा च नवार्करोचिषा
पतितेन ध्वजचित्रवाससा ;
रणभूमिरिव क्षणं ‡ ; क्षणैः
निचितप्रान्तमिवातिचिक्कणैः

---

* क्षण इति अरके क्षणे निचित क्ष्माय. अग्र इव अटकष इष, क्षणं विवात् गह्वरात् स्फुरदुग्रशिखा निशि ज्वलदग्निका धूमितेष्टकराजिरिव शोभते ।

† क्षणम् घनश्यामा अरके. कपिशैः पाटलैश्च कुसुमैः गुम्फितया ग्रथितया अतिरम्यया स्रजा मालया अन्वितः एणदृशां कामिनीनां कबरीबन्ध इव शोभते ।

‡ क्वचित् घनभावम् उपेयुषा परिशुष्केण रुधिरेण नितान्तधूसला, क्वचित् वहता तरलेन रुधिरेण [illegible] समच्छाया, क्वचित् इन्दुरोचिषा धवला, क्वचित् शाद्वलविनिन्दिना हरिता, क्वचित् नवार्करोचिषा पतितेन ध्वजचित्र वाससा अरुणा च रणभूमिरिव शोभते ।

अरुणं चणमुग्रवायुना
  शतशो भिन्ननिपातितं गृहम्* ॥ ३० ।
प्रकृतिस्थलपल्लवाञ्चला
  प्रियमित्रव्यसनेन दुःखिता ।
उपवीजयितुं शनैरिव
  स्वयमेवारभते तदोद्यमम्† ॥ ३१ ।
मरुता परिचालिते ततो
  मृदुना प्रावरणेऽपसर्पति ।
अतिरक्तवपुः पुनारविः
  सहसायाति विलोकनीयताम् ॥ ३२ ।
घणमूर्द्धकरः स्खलद्गति-
  र्निखिलं विश्वमिवाभिमन्त्रयन् ।
अभिधातुमिति स्फुटाक्षरं
  दिनकृत् प्रक्रमतेऽस्तमाविशन् ॥ ३३ ।
"ननु यस्य जगत्त्रयार्च्चिते
  जननं निर्मलनिर्जरान्वये
वत पारिषदाश्च यस्य मे
  गुरुशुक्रबुधादयो ग्रहाः ;
निखिलं ग्रहचक्रमोजसा
  लघयन्, उडुगणं तिरोदधत्

---

* [illegible] वृक्षे [illegible] अरुणम् उग्रवायुना शतशः भिन्ननिपातितं [illegible] गृहमिव [illegible] ।

† [illegible] तद् मित्रम् ।

प्रणुदन् जगतस्तमस्ततं
  विदधत् वीतशुचञ्च पद्मिनीम्;
समवृत्तितया प्रजामनो
  रमयन् तुल्यमनन्यशासनः
अभिप' कमलोदयं दिशन्
  जगदेकातपवारण' चिरम्;
उदयानुगुणोपगूहनां*
  प्रथमां† कुत्वण एव संत्यज्यन्।
श्रितवारुणदिक्‡ निरायति-
  नतु सोऽहं वत याम्यधोगतिम्;
वहिरोचितरागवर्चितं
  ननु पश्चात्तवस' विवास्य माम्।
द्विजराजमियं नवोदयं
  भजते पापमतिर्मदाश्रितम्॥" २४।
सहसास्तमयोन्मुखः प्रिया-
  वदनासक्तमलमलोचनम्।
स नृपेन्द्रविलोकनं रविः
  समलक्षयत् दृढ़रश्मिसंयतम्॥
समवेक्ष्य तदा तथाविधं
  मृतलोकस्थितिरपि विव्यये

---

* उदये इतो अनुगुणम् अनुकूलम् उपगूहनम् आलिङ्गनम् यस्यास्ताम्।

† प्रथमां—पूर्वां दिशम्।

‡ श्रिता आश्रिता दिक् पश्चिमा येन तादृशः सन्।

निराचक्रे, जाने सुरनरगणः कर्म्मवशगः
सुखं वा दुःखं वानुभवति न तत्रास्ति विमतिः ॥३९॥

इत्युक्त्वा कान्तया सार्द्धं
पर्णशालां न्यविक्षत।
दीर्घायमानयामां तां
त्रियामामत्यवाहयत् ॥ ४० ॥

इति श्रीश्रीवत्सचरिते महाकाव्ये शकुलमत्स्याप-
हरणो नाम दशमः सर्गः।

---

## एकादशः सर्गः ।

अथ प्रभाते नगराभियायिणा
पथा प्रतस्थे सह चिन्तया तया ।
नृपः समुत्तीर्य्य वनानि पर्व्वतान्
दिनावसाने नगरं समासदत् ॥ १ ॥

दक्षिणेन नगरं शुचिक्रियाः
काष्ठविक्रयपवित्रवर्त्तनाः ।
ऐकमत्यमवलम्ब्य सौख्यतः
काष्ठिकाः प्रतिवसन्ति केचन ॥ २ ॥

इति प्रष्टः श्रुतवान् जनप्रजात्
प्रिये ! सुख नो वसतां तैः सह ।
इति ब्रुवाणो नृपतिस्ततः परं ,
जगाम तेषां वसतिं मनोरमाम् ॥ ३ ॥

तौ विलोक्य पदचारिणौ पुरो
दम्पती रुचिरदर्शनौ ततः ।
काष्ठिकाः स्तिमितचक्षुषः परां
कोटिमापुरतुलस्य नन्दथोः ॥ ४ ॥

किं पुलोमतनयासमन्वितो
मार्गयोऽयमनुरेरुपद्रुतः ।

स्वां पुरीं प्रविहरन्नलक्षितो
वस्तुमैति विजनेऽस्मदालये ॥ ५ ।

किं स्मरः स्मरहराच्च* साध्वसात्
लब्धमूर्त्तिरनुकम्पया विधेः ।
एति वस्तुमपविघ्नमात्मनो
भार्य्ययाच विजनेऽस्मदालये ॥ ६ ।

किं विधुन्तुदभयात् विधुः स्वयं
रोहिणीपरिगतस्त्यजन् दिवम् ।
निर्जनेऽत्र वसतेर्थिकौतुका
प्रैति वा नियतपूर्णमण्डलः ॥ ७ ।

कार्त्तिकैः प्रणतिनम्रशिरोभिः
प्रीतिवाप्यसलिलाङ्कुतगण्डैः ।
कण्टकाचिततनूभिरमायैः
स्तूयते स्म नृपतिः सद्दारः ॥ ८ ।

सञ्चितं गुरु तपः सवितारं
लोकयद्भिरनमेष चक्षुभिः ।
शुष्ककायलतिकैर्नु निदाघे
नाम्रदादिभिरहो अंगदोश ॥ ९ ।

वात्याहतैर्विश्लथगात्रबन्धैः
वस्नानलोत्तापनिकामतप्तैः ।
तद्विक्षतानोकविदूननैश्च
न वा क्षताक्षाभिरहो तपस्या ॥ १० ।

---

* स्मरहर. भावनाद् दिव तयात् ।

न पीवराञ्चौ विगलद्धिमायाम्
आकण्ठमग्नैः सलिले च शीते ।
उद्वेजिताङ्गैरवशेन्द्रियैर्वा
तेपे तपोऽस्माभिरसाध्यमीश ॥ ११ ।

तथापि नाथ ! स्वयमन्वयानया
समन्वितो नः पतितोसि दृक्पथे ।
प्रसीद देव प्रतिबोधयात्मनः
स्वरूपमस्मानसुबोधमीश्वर ॥ १२ ।

किं ललाटनयन तिरोदधत्
छद्मना धृतमनुष्यविग्रहः ।
धामराञ्छलयितुं जनानिमान्
कान्तया कपटवेशयागतः ॥ १३ ।

प्रत्युवाच नृपतिः समाहतः
काष्ठिकान् ब्रुवत एव तादृशम् ।
मानवोस्मि, भवतां महात्मनाम्
आश्रयाय शरणागतः स्त्रिया ॥ १४ ।

इत्येव वादिनस्तस्य
वाक्यमाक्षिप्य काष्ठिकाः
ऋजुमेंव महाभाग ।
वक्तुमर्हसि किङ्करान् ॥ १५ ।

कायेन मनसा वाचा
भवन्त सह भार्य्यया

सपत्नीकं गुरुमिव
पूजयामो यथामति ॥ १६ ।

अद्यारभ्य महाभाग !
शरीरं जीवनञ्च नः ।
त्वदधीनं विजानीहि
प्रोक्तेन बहुना च किम् ॥ १७।

उपदेशेन कार्य्येण
देवीयं करुणापरा ।
यथाजातांश्च नो दारान्
शिक्षां लम्भयतु ध्रुवाम् ॥ १८ ।

मनुष्यपदवीं येन
स्पृशामो वयमञ्जसा ।
गुरो ! त्वया तथा कार्य्यम्
इत्येतत् प्रार्थयामहे ॥ १९ ।

आप्यायितोऽस्मि भवतां
वचसामृतवर्षिणा ।
हन्तिमाश्रित्य युष्माकं
करिष्ये देहधारणम् ॥ २० ।

एवं वादिनि श्रीवत्से
कात्तिका हृष्टचेतसः
तथेत्युक्त्वा नृपस्यास्य
संविधां चक्रुरादृताः ॥ २१ ।

प्रत्यहं काननं गत्वा
तैः सार्द्धं नृपतिस्ततः।
अल्पभारं महामूल्यं
चन्दनेन्धनमाहरत्॥ ३२।

तद्विक्रयेण नृपतिः
वणिग्भ्यः प्रतिवासरम्।
लेभे बहु धनं, तेन
खाद्यद्रव्यं समाहरत्॥ २३।

चिन्तया संस्कृतं भक्ष्यं
देवभोग्यं नृपस्ततः।
सापत्यांस्तान् सपत्नीकान्
समादरादभोजयत्॥ २४।

अनास्वादितपूर्व्वं तत्
भक्ष्यं पेयञ्च काष्ठिकाः।
भुक्त्वा पीत्वा च सर्व्वे तां
मेनिरे छलमानवीम्॥ २५।

तैः सार्द्धं वसतस्तस्य
सस्त्रीकस्य महोचितः।
सप्तधा सप्त भिन्नानि
दिवसान्यतिचक्रमुः॥ २६।

श्टहकर्म्मणि किंकर्य्याः
प्रियशिष्याः कलाविधौ।

तेषां स्वच्छिन्नचिन्तायाः
　वयस्याः संकथासु च ॥ २७ ।
योगक्षेमकरे भूपे
　दिनैः कतिपयैस्ततः ।
काष्ठिका वीतदारिद्र्याः
　तुच्छवृत्तिं जहुः क्रमात् ॥ २८ ।
सन्दीपिते ज्ञानदीपे
　तिमिरे मोहनामनि ।
निरस्ते, ते महामात्याः
　जाता गौरवभाजनम् ॥ २९ ।
देशोन्नतिसमाधायां
　नियुञ्जाना महत् धनम् ।
भूस्वामिना च सञ्जाताः
　प्रतिक्षणमवेक्षिताः ॥ ३० ।
व्यसने कृतसाहाय्या
　निवार्य्य चार्थकृच्छ्रताम्* ।
प्रतिवेशिजनानां ते
　प्रियभावुकतामगुः ॥ ३१ ।
तदवस्थांश्च तान् सर्व्वान्
　पश्यतो नृपतेस्तनुः
अप्राकृतापि हर्षाय
　मूर्च्छितेऽलं बभूव न ॥ ३२ ।

---

* अर्थाभावनिबन्धनं कष्टम् ।

प्रजापालनसम्भूत-
सौख्यस्य नृपतिः क्षणम् ।
स्मर्तुं नावसरं लेभे
प्रमासत् कालिकानिमान् ॥ ३३ ॥

भक्तौ सौख्याय दिव्याय
नासूयति शनिः कथम् ।
इत्यसौ नृपशार्दूलः
सा च चिन्ता विसिस्मिये ॥ ३४ ॥

कदाचित् रम्यतोराया-
स्सटिन्या तीर्थसि स्थितम् ।
चिन्ता समेत्य साचिता
प्रणनाम नरेश्वरम् ॥ ३५ ॥

केयं नमति मां चिन्ते !
किमर्थमिह चागता ?
इत्येवं सा वक्तुमित्थ-
मारेभे नृपगेहिणी ॥ ३६ ॥

इयं सा पद्मनाभस्य
वक्षस्थ गेहिणी शुभा ।
सतार्हि यद्गुणैर्नाथ !
मन्दोत्कण्ठा ननान्दरि ॥ ३७ ॥

नीचवंशप्रसूतेति
नास्याः कार्या विमानना ।

पङ्कजापि गुणैराढ्या
  पद्मिनी कस्य न प्रिया ॥ ३८ ।

अस्याः सुनिष्पन्नमपि ग्रहाणां
  वैगुण्यतोऽयं ननु दोष एकः ।
अदूदुषत् जीवितमिन्दुशुभ्रं
  गोमूत्रविन्दुः पयसामिवौघम् ॥ ३९ ।

वन्ध्यत्वरूपेण भुजङ्गमेन
  वल्ल्या इव श्रीङ्गमसम्भयाः ।
अस्या गुणौघैरपि भूषितायाः
  सुरम्यहर्म्यत्वमकारि भीमम् ॥ ४० ।

श्वश्रूः पुनर्दारपरिग्रहाय
  पुत्रं नियुङ्क्ते ननु नप्तृकामा ।
किन्त्वेष वत्सः सुदृढानुरागो
  न तन्मते तिष्ठति धर्म्मबुद्धि ॥ ४१ ।

सुतोऽनया * मे प्रतिषिध्यमानः
  पत्न्यन्तरं नेच्छति सङ्ग्रहीतुम् ।
इति स्थिरीकृत्य च पश्यतीमां
  श्वश्रूः सदा रोषकषायनेत्रा ॥ ४२ ।

त्वयानुरुद्धः सच पद्मनाभः
  आदास्यते नाथ कलत्रमन्यत् ।

---

* अनया स्नुषया प्रतिषिध्यमानः मम सुतः पद्मनाभः पत्न्यन्तरं संग्रहीतुं न इच्छति इति हेतोः श्वश्रूः पद्मनाभस्य माता इमां सदा रोषकषायनेत्रा सती पश्यति।

इत्याशयैषा शरणं प्रपन्ना
यत् सांप्रतं संप्रति तत् विधेहि ॥ ४३ ।
इत्येवमुक्तो नृपतिः सरोष-
श्चिन्तामवादीत् स्फुरिताधरोष्ठः ।
किं विस्मृतं ते यदहं हिनस्मि
बहुं विवाहं यत वह्निनर्थम् ॥ ४४ ।
अधमो मदोरुहवयेष्वयं तरु-
र्वहुभिर्लताभिरुपगूढविग्रहः ।
बहुवल्लभत्वमचलेष्वपि प्रिये,
न सहे, कथं तनयतामुपेयुषि ॥ ४५ ।
दयिते ! प्रसूनरुचिराश्च मालतीं
वहता व्यपेतकुसुमां परां समं ।
समरागता यदपि दर्शितेऽमुना
तरुणा, तथापि किमयं सुतेः पदम् ?॥ ४६ ।
प्रियस्य यासां व्यसने विपत् समा
समोचिता तास्वपि हृत्तिरस्य च ।
रवौ समप्रेम्णि विपत्तिमागते
तमोनिमग्ना हि दिशेव पद्मिनी ॥ ४७ ।
न यत्नलाभः समवृत्तितां व्रजन्
इमां प्रवीणां न च तां नवा समं ।
यमिष्यते तोषयितुं ततः क्रमात्
सुखं निरुद्धप्रसरं भविष्यति ॥ ४८ ।

न चित्रमेतत् यदि सा नवोढा
मायापरा तन्नयनं रुणद्धि ।
अविद्ययाधिष्ठितचित्तवृत्तेः
विभोरपि ज्ञाननिधेर्विकारः * ॥ ४९ ।

तस्याः समासाद्य शरीरसङ्गं
चिन्तामणिस्तादृश एव कान्तः
विहाय नैसर्गिकभावमग्रयम्
अलाततामेष्यति नाच शङ्का ॥ ५० ।

अवयसि बत पुत्रि सञ्जयन्ती नवोनां
जनिमियमतिमूढा पद्मनाभप्रसूतिः ।
लगयति विषभीमा वस्तुगत्या भुजङ्गीं
तदनुसरत यूयं मामिमां† वारयामि ॥ ५१ ।

इति श्रीश्रीवत्सचरिते महाकाव्ये काष्ठिकालयाभिगमनो नाम एकादशः सर्गः ।

---

* यदा ज्ञानानाथ विभुरपि अविद्यया (मायया) विकृतावस्थ भवति, तदा अल्पज्ञानाधः स पद्मनाभः तया नवोढया स्वाभिहितचेता यदि तां नैव जानाति किं चित्रम् ।

† इमां पद्मनाभजननीम् वारयामि, कृपयापि मामनुसरत मम साहाय्यं कुरुत ।

## द्वादशः सर्गः ।

गच्छन् कदाचित् शनिमायया द्राक्
  कश्चित् वणिक् सैकतरुद्धनौकः ।
उद्धारणेऽस्याः विफलप्रयासो
  विषादसिन्धौ सगणो न्यमाङ्क्षीत् ॥ १ ।
दैवज्ञवेशेन तिरोहितात्मा
  शनैश्चरस्तत्तरणोमुपेतः ।
उवाच साधो ! यदकोपतस्ते
  दुरुत्तरापत् समुपस्थितेयम् ॥ २ ।
पूर्व्वं प्रयाणात् भवता न शान्ति-
  र्नवग्रहाणां विहिता यथार्थां ।
विधीयतां सा प्रथमं यथावत्
  पश्चात् तरेरुद्धरणं सुसाध्यम् ॥ ३ ।
अनुष्ठिते तद्वचनात् यथावत्
  यागे ग्रहाणां परिपूजने च ।
भक्त्या विनम्रं विहिताञ्जलिं तं
  कार्त्तान्तिकोऽसौ समुपादिदेश ॥ ४ ।
साध्वी सदाचाररता वराङ्गी
  काचित् शुभा काष्ठिकवासभूमौ
वसत्यसौ चेत् स्पृशति प्रसन्ना
  तरिस्ततः प्राप्स्यति वायुवेगम् ॥ ५ ।

तद्वल्लभो याति वनं प्रभाते
काष्ठाय यामात् परमेति गेहम् ।
गन्तव्यमस्मात् सविधे त्वयास्याः
परं परेद्युर्द्युमणेः प्रकाशात् ॥ ६ ।

तस्याः प्रसादेन विना तवेयं
तरिर्विपन्ना भुवमित्यवेहि ।
सर्वप्रयत्नेन ततस्त्वयासौ
प्रसादनीया ननु सार्थवाह ॥ ७ ।

स्त्रिया हि चित्तं नवनीतकोमलं
परोपतापेन भवेत् द्रुतं द्रुतम् ।
ततस्त्वयेदं व्यसनं सुदुस्तरं
निवेद्यमस्यै रुदता भृशं वणिक् ॥ ८ ।

या तत्र पत्नी गतभूषणत्वात्
श्रोच्चा विपन्ना ननु पद्मिनीव ।
विमुक्तवातेरितकेशजाला
धूमावलीच्छन्नशिखेव वह्नेः ;
म्लानच्छविः क्षीणतनुः प्रकामं
भौमोपरक्ता ननु रोहिणीव ।
तरुत्वचा संवृतगात्रयष्टिः
सदैव नासाग्रनिविष्टदृष्टिः ;
दृष्टा त्वया सान्द्रविहीननेत्रं
तां विद्धि नौकोदरणे निदानम् ।

प्रयाहि साधो कुरु तत्प्रसाद-
मुक्त्वैवमादित्यसुतस्तिरोभूत् ॥ ९ ॥

म्लानद्युतौ व्योमतलात् निपत्या-
परं पयोधिं विशतीन्दुबिम्बे ।
पत्युर्वियोगादिव शोकमग्ने
तारागणे नश्यति नष्टभासि ;
पूर्व्वाद्रिमाकम्य च सानुरागे
करैः समुत्क्षिप्य तमोवितानम् ।
क्रमेण संभिन्नदलां हसन्तीं
सरोजिनीं पश्यति पद्मिनीशे ;
महीरुहाणां शिखरेषु बाला-
तपेन रक्तेषु दवाग्निबुद्ध्या ।
भियेव सर्व्वेषु विहङ्गमेषु
जहत्सु नीड़ान् कृतघोरनादम् ;
स सार्थवाहः कृतनित्यकर्म्मा
स्नातः पवित्रो गललग्नवासाः ।
उपानहौ मुक्तपदौ विनीत-
श्चिन्तान्तिकं प्रापदमौलिमूर्द्धा ॥ १० ॥

तां प्रत्यभिज्ञाय विलक्षणैस्तैः
चिह्नैः चितौ पातितजानुहस्तः ।
ननाम भक्त्या गद्गदस्तुनेत्रो
नुनाव बद्धाञ्जलिरेवमेनाम् ॥ ११॥

तरी मेऽन्तरोघे निमग्नाचलास्ते
तदुद्धारणं त्वत्पदस्पर्शतः स्यात् ।
न चान्या गति में विजानीहि मातः
सति ! त्वां नमामीश्वरि ! त्वं शरण्या ॥१२॥

श्रुतं मे पुरा त्वं पितुर्यज्ञभूमौ
निशम्य प्रमूढात् ततो भर्तृनिन्दाम् ।
अहासीः शरीरं समाधिप्रभावात्
सति ! त्वां नमामीश्वरि ! त्वं शरण्या ॥१३॥

यतस्तं गतासुं वने सत्यवन्तं
पुनर्जीवितं त्वत्प्रसादाच्चकर्थ ।
न चित्रं यदि त्वत्पदस्पर्शनान्मे
तरी स्यात् समुत्तारिता दक्षपुत्रि ॥ १४ ।

ना त्वा जगद्दाहसद्यःप्रशक्तेः
कृशानोः परित्रातुमीशाभवत् का ।
शोचाप्रदाने प्रवृत्ताद्य सीता
तरी मे विपन्ना तदागच्छ मातः ॥१५ ।

नै ता भ्रमन्तीं विमुक्ताद्य पत्या
यदासौ किरातोऽवदद्दुष्टवाक्यम् ।
दा न निहन्तुं त्वदन्या च का स्यात्
समर्था, यदि त्वं दयार्द्रा न वा स्याः ॥१६ ।

हं वणिक् दक्षसुता सती सा
किमर्थमेव वद जल्पसि त्वम् ।

त्वां प्रत्यभिज्ञातवतो मने ! त्वं
मां विप्रलब्धुं समुपस्थितोसि ॥ १७ ।

निशम्य चिन्तावचनं स साधुः
दीनाननस्तन्मुखसक्तदृष्टिः ।
उदश्रुरेवं विहिताञ्जलिस्तां
जगाद रोषेण कषायनेत्राम् ॥ १८ ।

मातः परोक्षं नहि तेऽस्ति किञ्चित्
सम्भाव्य किं तत् रविजं ग्रहं माम् ।
दंहस्यकाण्डे वद नेत्रनिर्यत्-
क्रोधाग्निना निष्करुणा दयार्हम् ॥ १९ ।

नौकानिरोधात् पुलिने तटिन्याः
दुःखेन कालं नयतः कियन्ति ।
दिनान्यतीतानि समात्र मातः
घोषां दशां प्राप्नुवती जनानाम् ॥ २० ।

अकालपाताच्चमसस्तसंख्यकं
क्रमेण सीदत् विजहत् महार्घताम् ।
निक्रन्तति द्रव्यमतीव सुन्दरं
विलोक्यमानं मम जीवितं सति ॥ २१ ।

व्यपेतकाला कतिचित् पदार्थाः
निर्मूल्यतां यान्ति च निर्व्यपेक्षाः ।
न वेद्मि कः कर्मविपाक एवं
प्राणेषु वित्तेषु च मां हिनस्ति ॥ २२ ।

अनल्पलोकेषु च पृच्छमानो
यः कश्चिदागत्य वदिष्यति त्वाम् ।
यद्येष साधुः सगणोऽतिमात्र
कष्टं प्रपन्नः खलु सीदतीति ॥ २३ ।

ज्योतिर्विदामग्रसरस्य कश्चित्
उपादिशत् मा गणयन् कदाचित् ।
अस्यत्र पल्ली किल गूढरूपा
काचित् सती, तां शरणं भजस्व ॥ २४ ।

तस्याः पदस्पर्शनमात्रतस्ते
विपद्विमुक्ता भविता तरीयम् ।
तत् सार्थवाह ! व्रज तत्सकाशं
तया विनान्या न गतिस्तवेति ॥ २५ ।

त्वां प्रत्यभिज्ञाय विलक्षणैस्तै-
स्तैर्लक्षणैस्तद्गणकोपदिष्टैः ।
प्राप्तोऽस्मि मातश्चरणार्पणेन
तरीं समुत्तारय तारिणि त्वं ॥ २६ ।

किंवा भयं देवि ! शतेश्वरात् ते
बिभेति सिंहो हरिणात् किमेतत् ।
प्रकृष्टमैश्वर्य्यमहो भवत्याः
सर्व्वामरेभ्यः प्रभितः कथा का ॥ २७ ।

खद्योतकः स्वेन तिरोविधत्ता
धाम्ना च तारामुडुरिन्दुकान्तिम् ।

दृष्ट्वा सौरीं, न कदाचिदेवं
सौरिः सतोभावरितुं क्षमः स्यात् ॥ २८ ।
तदेहि मातः करुणापरा त्वम्
पदा स्पृशन्ती तरणीं निरुद्धाम् ।
विशालय द्राक् तव कीर्त्तिरेवा
प्रद्योतयत्वम्ब ! जगत् चिराय ॥ २९ ।
इत्येवमुक्त्वा गलदश्रुनेत्रे
चिन्तापदं चुम्बति सार्थवाहे ।
सा पद्मनाभस्य च धर्मपत्नी
प्रचक्रमे भाषितुमादृता ताम् ॥ ३० ।
सन्त्यस्ते या त्वयि भक्तिभक्ता
सा देवयोनिष्वपि दुर्लभा हि ।
तत् सा कथञ्चिदपि मानुषेषु
न सम्भवेत् प्रागिति निश्चयोऽभूत् ॥ ३१ ।
केनापि कार्य्येण निगूढरूपा
पत्या तथा छद्मनरेण सार्द्धं ।
अवातरत् कापि भुवं सुरेशी
न मानुषीयं नै च मानुषोऽसौ ॥ ३२ ।
आकारगुप्तावपि यत्नतो वां
गतिः स्थितिर्योक्तिरमानुषी सा ।
स्फुटाक्षरं प्राह निजस्वरूपम् ।
ईदृग् रहस्ये तुमुलं रहस्यं
(रहस्यमुद्भेत्तुमलं हि चेष्टा) ॥ ३३ ।

अथ वणिक् प्राह यथा तथैव तत्
न सत्रयोऽस्मिन् विषयेऽणुमात्रक ।
न बुध्यते तत्र प्रकृत प्रयोजन
प्रणोदिता येन दशामिमां गता ॥ ३४ ।
न तेन बुद्धेन च न प्रयोजन
महत् पुरास्माभिरनुष्ठित तप ।
तदेव चैव भवती सभर्तृका
चकार न प्रापयितु कृतार्थताम् ॥ ३५ ।
श्रुत भवत्या मुखपङ्कजाद्यथा
यथा हरि सौरिनिपीडित स्वयम् ।
शिला चकर्त्ताश्रितकोटविग्रहो
धृतकवेणि विदधश्चिर वमाम ॥ ३६ ।
हरापि गौर्य्या सह सौरिपीडनात्
कुवेरग्रेल विजहन्नगेश्वरम् ।
दधत् वपुर्मानुषमस्तदालये
निकृष्टकर्म्मा चपयत्यनहसम् ॥ ३७ ।
न चैव सौरिश्च जसार्थवाह
समागतस्त्वा सति विप्रलब्धुम् ।
यस्मात्क्रयादेवमनुप्रपन्ना
शोच्या दशा विश्वविमोहिनी त्वम् ॥ ३८ ।
स एवमेव कृपण प्ररोदिति
चितौ लुठत्याकुलमानसो मुहु

* लभित कर्मवदमूल्यम्।

विचुम्बति त्वत्वरणं नताननो
मनो न विश्वासमुपैति मामकम् ॥ ३९ ।
व्रजामि नित्यं सलिलाय निम्नगां
तरिश्च यत्नाप्यचलां कियच्चिरम् ।
पिता * न यावत् विनिवर्त्तते वनात्
विधेहि तावत् वणिजो हितं द्रुतम् ॥ ४० ।
प्रबोधितैवं नृपधर्मपत्नी
चचाल हृष्टं वणिजं समन्वक् ।
कौतूहलात् कालिकयोपितस्ता-
मनुव्रजन्ति स्म विहृष्टहर्षाः ॥ ४१ ।
आसाद्य चिन्ता तटिनीं तटस्था
व्यलोकयत् तां † तरणीं निरुद्धाम् ।
आरोहयंस्तां विनयाच्च नत्वरः
तां ‡ मेगमा नार्यसनल्पहर्षाः ॥ ४२ ।
तत्पादसंसर्गत एव नौका
गतिं प्रपेदे प्रतिरोधमुक्ता ।
साधो ! तरौमौमवरोहयाद्य
भर्त्तान्ययोग्येगमुपेत्यपश्यन् ॥ ४३ ।
भक्त्या ततस्तां परिपूज्य साधुः
[illegible]
प्रवर्त्तते तावदुपेत्य सौरि-
ं देवप्रवेशो वणिजं न्यषेधीत् ॥ ४४ ।

---

* [illegible]  † पाठ—निरुद्धाम् नौकाम् ।  ‡ पाठ—[illegible] ।

मा तावदेवं कुरु सार्थवाह!
पुनस्तरण्यां प्रतिरुद्धगत्याम्।
सुदुर्लभेयं भविता, तदानीं
का ते गतिः? याहि सहैनया तत्। ४५।
प्राग्ज्योतिषराजस्य महामहिम्नः
श्रीवत्सनाम्नो नृपतेरियं सा।
धनार्णवोत्था कमलापरेव
चिन्तेति मन्त्री महनीयकीर्त्तिः॥ ४६।
प्रनष्टराज्येन शनेः प्रकोपात्
पत्या सहैव वनमाजगाम।
सतीत्वसम्भूतमहःप्रभावात्*
एनं परिघातुमना विपन्नम्॥ ४७।
उद्भ्रान्तचित्ता पतिदेवतेति
न मन्यते सौरिमिव तृणाय।
भरानुरक्ताश्च विधातुमेनां
सर्व्वात्मना तत् यतते स सौरिः॥ ४८।
प्रत्यग्रहम्यं ननु रूपमस्याः
ईदृक्तया कालधि सावधारि।
राहुग्रस्तेव शशाङ्कमूर्त्तिः
खातिह्नीयं ग्लानिमियद्दैव॥ ४९।
यदस्ति रूपं निहतावशिष्टं
तदेव साधो! स्फुटमाह तुभ्यम्।

---

* सतीत्वतेज प्रभावेण।

यदेवमेवं भुवनत्रयेपि
   न द्रक्ष्यसि त्वं नच पश्यसीति ॥ ५० ।
ससागरा तस्य धरा करार्पिता
   यः कर्त्तुमेनां वशवर्त्तिनीमलम् ।
अयं गुणोऽस्या ननु सर्व्वयोषितां
   विलक्षणः केन नवेयमिष्यते ॥ ५१ ।
सम्पूर्णतां तेन शनेः प्रतिज्ञा
   गमिष्यतीत्यत्र न कापि शङ्का ।
इति ब्रुवन्तं तमुवाच चिन्ता
   विकम्पितभ्रूकुटिलानना सा ॥ ५२ ।
किमात्थ ? धिक् ते गणनां रे मूढ़ !
   पूर्णप्रतिज्ञो भविता स सौरिः ?
कथं नु ते मूर्द्धनि तीव्रवेगम्
   अद्यापि वज्रं पतितं न पाप ॥ ५३ ।
अन्यादृशस्ते मयि दृष्टिपातः
   मन्ये स एवासि शनैश्चरस्त्वम् ।
मा प्रद्रव प्रद्रव तिष्ठ तिष्ठ
   कथं विलीनोऽसि भयात् नभस्तः* ॥ ५४ ।
सा विस्मितान् प्राह च नैगमांस्तान्
   दुरात्मनाहं कथिताऽस्मि केति ।
तदाद्य नौकां स्थगितां कुरुध्वम्
   उत्कण्ठिताहं पतिदर्शनस्य ॥ ५५ ।

---

* नमस्तः —पातालं, रसातलम् ।

इत्यादिमन्तीं स वणिक् विनीतः
तां प्रत्यवादीत् धृततत्पदाब्जः।
अवेहि मातस्तव वासभूमिः
इतः प्रदेशात् दश योजनानि ॥ ५६।

स्पृष्टा तरिस्त्वच्चरणारविन्दैः
प्रयाति वायोरतिगम्य वेगम्।
तदेर्य्यमास्थाय कियन्ति मातः
दिनानि तिष्ठाच, सृतं भयेन ॥ ५७।

यस्या भयात् सौरिरसौ विहस्तः
प्रालोयत क्वापि च पश्यतां नः।
तस्यास्तवाज्ञात् ग्रनिता भियालं
द्रक्ष्यन्ति सर्व्वे भवतीं सतीं ताम् ॥ ५८।

व्यामोहितस्तै रविसूनुवाक्यैः
समुत्सृष्टेन प्रबलप्रलोभः
स्प्रष्टुं त्वदङ्गं यदि कश्चिदस्य
गतिर्दवाग्नौ पततो भुवेव ॥ ५९।

श्रीवत्सराजः सुगृहीतनामा
ससागराया धरणेरधीशः।
भवत्पतिः, मत्पतिरम्ब ! तस्मै
करं प्रतापेन जितो ददाति ॥ ६०।

त्वं देवि ! साक्षात् ननु दक्षपुत्री
देहं पुनर्भौतिकमादधाना।

अस्मद्विधानां करुणार्द्रचेताः
　विपद्विनाशाय धरां पुनासि ॥ ६१ ।
यस्मै सरिलब्धगतिः प्रयाति
　विजित्य सूर्य्याश्वगणं जवेन ।
स त्वत्पदाम्भोजरजःप्रसादः
　तत् किं न येनासि समाचनीया ॥ ६२ ।
कियत्सु गच्छत्सु दिनेषु मातः
　कार्य्यं समाधाय निवर्त्तमानः ।
नेष्यामि निर्विघ्नमलब्धकार्य्यं
　पत्युः सकाशं भवतीं स्थिरेधि * ॥ ६३ ।
चिन्ता तदेवं वणिजानुनीता
　प्रत्युत्तरं न प्रतिपद्यते स्म ।
बद्धाञ्जलिर्मुद्रितनेत्रयुग्मा
　तस्थौ च सूर्य्याभिमुखी स्थिराङ्गी ॥ ६४ ।
भगवन् जगतस्तमो हरन्
　उदयाद्रेश्चरमाचलं व्रजन् ।
वितरन् निखिलाय देहिने
　ननु चैतन्यमतन्वते श्रियम् ॥ ६५ ।
स्वसुतस्य कथं शनेरिमां
　श्रियमुच्छेदपरां परात्पर ।
न निवर्त्तयसि प्रमाद्यतो
　निजकार्य्यात् तव तात ! निन्द्यता ॥ ६६ ।

---

* स्थिरा सर्व्वापदा पवि भव ( धरेर्लोट् हि )।

अथवा छलनापरेण मां
विपदं दीपमृते सुतेन ते।
परिलम्भयता वतेदृशीम्
पितरालोकय नृत्यते * मुदा ॥ ६७।

जनकाय निवेद्यते कृतं
तनयेनाहितकर्म्म भास्कर !
अनिलाग्निरिव यत्कृतं
कदनं तत् तव कथ्यते मया ॥ ६८।

अथवा अनिशासनं पितः
तव दुःसाध्यमिदं नु तिष्ठतु।
हर मे हर रूपमीदृशं
विकृतां मां कुरु श्यामदर्शनाम् ॥ ६९।

इत्युक्त्वा वरमीदृशं चितिभुजः पत्नी जगत् तत्क्षणं
छन्नं घोरतमश्छटाभिरखिलं कृत्वावलोकं क्षणम्।
निर्याते तिमिरे क्षणेन नयने प्रोन्मीलयंस्तां पुरो-
ऽदृष्ट्वा विस्मयमागतस्तत इतोऽन्विष्यन् वणिक् दृष्टवान् ॥
पर्य्यङ्के शयितां विलुप्तवपुषं कंकालशेषां जरा-
जीर्णां निश्वसतीं वलीमुखमुखीं केशालकैर्वर्जिताम्।
दुर्गन्धां किल चिचिर्णीं परिवृतां भीमैर्भुजङ्गैस्तथा
दुर्दर्शां दहता च देहमहसा पोतैकदेशे स्थिताम् ॥७०।

इति श्रीश्रीवत्सचरिते महाकाव्ये चिन्ताविरोगो नाम
द्वादशः सर्गः।

---

* नृत् + भावे लट्।

## त्रयोदशः सर्गः ।

आपत्तिमासानाय वनात् कृपाय
सव्येतराक्ष्णा स्फुरतातिमात्रम् ।
आवेदि सर्व्वं तदग्रमेव घोरं
निशम्यते तेन पुरा स्फुटेव यत् ॥ १ ।
सव्येतरत् चक्षुरिदं मदीयं
स्फुरत् स्फुटं वक्ति किमप्यनिष्टम् ।
न केवलं नामत एव धत्ते
वामत्वमेतत्ननु चार्थतोपि ॥ २ ।
राज्यं समुच्छेदमियाय सर्व्वं
नीराजधानिर्वनमाश्रितोस्मि ।
शरीरमायस्य करोमि वृत्तिम्
अज्ञानवासश्च चिरं वसामि ॥ ३ ।
यन्मद्वामेवं रविसूनुरेषः
दुह्यत्यजस्रं नहि तेन दूये ।
एकाहि चिन्ता तमसां प्रमाथे
सदातनी भास्कररश्मिमाला ॥ ४ ।
सा चेत् तदा किं परिचारिकाभिः
वाणी मदीया यदि किं सुधाभिः
पोतेन किंवा यदि बुद्धिरस्या
विपत्पयोधेस्तरणे सुखेन ॥ ५ ।

अनेष तां तां विषमां प्रतिज्ञां
मुहुर्मुहुर्मां स्फुरदेतदक्षि ।
प्रतिक्षणं स्मारयति प्रकम्प-
श्चित्तस्य वक्तीव तदिष्टसिद्धिम् * ॥ ६ ।

उत्कम्पते पादयुगं पुरस्तात्
यातुं, समासन्नतरे निकेते ।
सोदत्यहः किं सुतरां मदङ्ग'
किमद्य चित्तं व्यथतेतरां वा ॥ ७ ।

चिन्तेतरत् वस्तु न किञ्चिदस्ति
मत्स्वामिकं, तत् तदयम्बणो † वा ।
किमन्यदस्य स्फुरणेन वामं
ससूचयेत् चक्षुरसौ क्षतोऽस्मि ॥ ८ ।

नायाति यावत् तदनिष्टवार्त्ता
स्फुटाक्षरा दुःश्रवणा श्रुतिं मे ।
गच्छामि तावत् विषयान्तरं द्राक्
श्रेयस्तथा कुर्व्वत एव मन्ये ॥ ९ ।

तथाकृते त्वयुततद्विपत्तेः
मृत्युः सुखो मे व्यसनं हि कृच्छ्रम् ।
सन्देहदोलाचलचित्तवृत्तेः
अमृत्यु कष्टं मरणाधिकं यत् ॥ १० ।

---

* मुहुर्मुहुः स्फुरत् एतत् वामम् माम चक्षुः मां अनेष तां तां विषमां प्रतिज्ञां प्रतिक्षणं स्मारयति, चित्तस्य प्रकम्पः तदिष्टसिद्धिं, मम अग्रे इष्टसिद्धिः तां चिन्ताया-परवशतामुपेतस्य वक्तीव ।

† मम चिन्ताविषयस्य वस्तुनः अन्यत् अनिष्टं तस्मात् ।

निरस्य मातुः सकृदेव दुःखं
सम्पद्ये वरं तत् तदनिष्टजन्म ।
आलोचनान्तं तदनिर्णये तु
वैकल्यमीदृक् न पुनः सहिष्ये ॥ ११ ॥

चिन्तार्थमेवं परिचिन्तयन्त-
मुपागमत् तं सहि, पद्मनाभः ।
यत्नेन संस्तम्भितशोकपिण्डः
प्रोवाच चेमं स्वमुखार्पिताक्षम् ॥ १२ ॥

आवर्त्तनात् काननतोऽद्य तात !
वेला व्यतीतेति वयं प्रकामम् ।
उद्विग्नचित्ता अतियापयामः
कालं भवद्वर्त्मनि दत्तनेत्राः ॥ १३ ॥

"कीदृग्दशा मे वनिता वराकी
तूर्णं समाख्याय निरस्य* चिन्ताम्" ।
इत्येवमुक्तो व्यथितोऽपि गाढं
स काष्ठिकः सुस्पष्टवदावभाषे ॥ १४ ॥

माता त्वया तात ! विभाविता या
यत् कष्टमायाति कथं मया तत् ।
आवेद्यते ते, वचसाभिधातुं
सुदुष्करं तत्, तदलं नु पृष्ट्वा ॥ १५ ॥

इत्येवमुक्तो नृपतिः प्रहृष्ट-
स्तमब्रवीत् वत्स ! लघु प्रयाहि ।

---

* निरस्य—निराकृत्य (निः+अस्+ल्यप् हि)।

तद्दर्शनाय त्वरते मदीयं
चित्तं, किमेवं वद मन्यरीषि ॥ १६ ॥

स्पन्देन वामस्य विलोचनस्य
चिन्तागता याजनि दुष्टचिन्ता ।
मनःशरीराश्रयमत्र यच्च
वैकल्यमासीत् नितरां गरीयः ;

चिन्ता मदर्थे भ्रमुत्सुकेति
त्वद्दानमात् शुश्रुवुषो * मम द्राक्
दूरं गता साच गतं विदूरं
तव प्रणामात् पूर्व्ववदस्मि सुस्थः ॥ १७ ॥

सम्बन्ध एतादृश एव नूनम्
अन्योन्ययोश्चित्तशरीरयोर्यत् ।
एकस्य दुःखानुभवेऽपरस्य
दुःखानुभूतिर्नियतेत्यवेहि ॥ १८ ॥

देहेन सा चेत् भ्रियते तदा किं
त्वामेवमेव विकलं, कथं वा ।
अनुद्धतौ मे परितोषमेव
पश्यामि, खिन्नोऽसि किमातपेन ॥ १९ ॥

क्रमेण मध्यं रविरम्बरस्या-
रूढः प्रचण्डातपतामुपेतः ।
तीव्रं ललाटन्तपमग्निगर्भं
मयूखजालं विसृजत्यजस्रम् ॥ २० ॥

---

* शुश्रुवुषः — श्रुतवतः (श्रु+क्वसु, षष्ठ्येकवचनम्) ।

तद्वत्स ! शीतां वटपादपस्य
छायामुपेहि श्रमनोदनाय ।
चिन्ता त्वदर्थं भृशमुत्सुकेति
तद्दर्शनाय त्वरते मनो मे ॥ २१ ।
जानासि बाला मयि जातभक्ति-
ऽप्रीते न भुङ्क्ते न च पीयते * सा ।
त्वाप्त्या सुखं साध्य मयातिदुःखं
प्रतीक्षुषा हा गमिता चिराय ॥ २२ ।
इति ब्रुवाणः परमाच्च यत्नात्
प्रत्युत्थितस्तेन स भूमिपालः ।
आवासमागात् विगतेपि काले
प्रत्युद्गमार्थं न च सा समेता ॥ २३ ।
किमेतदित्याकुलधीः समन्तात्
दिदृक्षया प्रेरितनेत्रयुग्मः ।
ददर्श काञ्चित् स्रवदश्रुधारां
धराशयां निश्वसतीं विशालम् ॥ २४ ।
विमुक्तकेशीं स्फुरदोष्ठबिम्बां
ध्यानेन निस्पन्ददृशं निषण्णाम् ।
वामे करे स्थापितवामगण्डां
शोकेन मूकामपरामपश्यत् ॥ २५ ।
प्रमुक्तकण्ठं रुदतीं च काञ्चित्
शुश्राव सञ्जातगुरुप्रकम्पः ।

* दिवादिगणीय पी + यट्, ते ।

आहत्य वक्षः परिपीड़यन्ती
मुच्छिन्दतीं कां स्वकथानदर्यत् ॥ २६ ।

प्रियाहितं मामुपसृत्य कापि
न वक्ति किञ्चित् त्वयका किमुक्तया ।
यत् वक्ष्यते तत् स्फुटमाभिरुक्तम्
अवस्थया शोकजयेहयेव ॥ २७ ।

नूनं प्रिया नास्ति वनान्यथा चेत्
कालो महान् मे गृहमागतस्य ।
सन्तप्यमानस्य च दृष्टिमार्गे
चिरायते * सा पतितुं कथं वा ॥ २८ ।

गच्छतोऽद्य सदनात् वनाय मे
शङ्कया कथितमस्य चेतसः ।
यत् परापतत पश्यति प्रिये
त्वन्मुखं न मम दृश्यतां पुनः ॥ २९ ।

किं प्रत्ययात् तेषु हरिप्रियायाः
न वेद्मि वाक्येषु तथाविधेषु ।
नैतत् मनो मे त्वदनिष्टपात
प्रत्येति यत्र स्फुटति प्रिये द्राक् ॥ ३० ।
पतिव्रतेयं प्रमिपीड़नात् त्वां
रचिष्यति चौषिदतां वरेण ।

* चिरायते—विलम्बते ।

सदीगतं मामिति सिन्धुपुत्री
सारस्वदी वक्ष्यति सान्त्वनाय * ॥ ३१ ॥

क्व सा गता श्रीमुखनिःसृता वाक्
सुधेव साभूत् मम भाग्यदोषात् ।
प्रासाय सौरी विहृताननेत्वं
जहास्यकाण्डे कथमन्यथा माम् ॥ ३२ ।

एत प्रकुतोऽप्यथवा स सौरिः
किं कर्तुमीशो मरणात् परं सः ।
त्वया विना मे हतजीवितस्य
सन्धारणं निष्फलमद्य जातम् ॥ ३३ ।

अये महत् काठिकहन्तमेतत्
घोरकारभिवाम्बरमेति दूरात् ।
स्फुटीकृतेयं भविता नु वार्त्ता
फर्त्तुं तया यामहमस्मि भीतः ॥ ३४ ।

श्रोत्रेन्द्रिय ! त्वं विकलं भवाद्य
चैतन्य ! तात ! त्यज मां चिराय ।
प्रियाहितं श्रावयितुं समेति
शोकाकुलः काष्ठिकसंघ एषः ॥ ३५ ।

* हे धीविभवो वरिष्ठ ! राजन् ! इयं वनिता विना अधिदैवनात् मां ईक्षते सिन्धुपुत्री चन्द्रो सदीगतं मां आश्वासनाय वक्ष्यति वद [illegible] [illegible] [illegible] इति [illegible] [illegible] [illegible] [illegible] [illegible]

महापकारं ननु कुर्व्वतोपि
शत्रोरनिष्टाचरणे महात्मा ।
न जातनुज्ञास्यति तात एषः
तस्मात् तदर्थं समयो न नेयः ॥ ३६ ।
अथापि कार्य्यानुमतेः प्रतीक्षा
मातुर्हृतायाः सुमहान् हि कालः ।
यावत् न निर्विंसमतिर्विजह्यात्
सा जीवितं तावदिमे व्रजाम ॥ ३७ ।
तान् नैगमान् घ्नन्त्य समूलघातं
प्रणिघ्नतां नोऽद्य गुरुर्न तातः ।
एते वयं नापि च तद्विधेयाः
तदेत यामोद्धरणाय मातुः * ॥ ३८ ।
त्वं तात ! तावत् वनिताहितीयः
स्यात्माप्यकार्य्यैः सुसमाहितात्मा ।
प्रत्यन्तरीभावमुपेत्य तातं
सेवस्व यत्नात् मनु पद्मनाभ !॥ ३९ ।
प्रयत्नसंस्तम्भितवाष्पपातं
महाधिदूनं विकलेन्द्रियस्य ।
नैशा वयं द्रष्टुमिमं न चास्मै
मुखानि संदर्शयितुं क्षणेऽस्मिन् ॥ ४० ।
तं तावत् वणिगधमं निपातयद्भि-
स्तां प्रत्याहृतिमुदितां पुरो निधाय ।

* तत् यकात् एत चागच्छत मातुः उद्धरणाय याम। यामेति प्रार्थनायां लोट ।

आर्यस्य स्तुतिगिरिगिराशुधौतमेतत्
द्रष्टव्यं सुखनलिनं प्रहर्षरम्यम् ॥ ४१ ॥

सुलैषां वचनमिदं सुधायमानं
सुस्पष्टं मनसि नृपश्चकार हृष्टः।

हन्तैतेऽपरमिव संलपन्ति चिन्ता-
संक्रान्तं, तदिह हि संगता न शङ्का ॥ ४२॥

भव हृदय सुधीरं त्वत्प्रवार्त्तं त्वमेभि-
र्वचनमधुभिरेषां संशयस्ते विलुप्तः।

यमसि विधुरमेवं प्रहसेऽपारसिन्धुं
सच समजनि पुख्यैः पादलह्या हि कुल्या ॥ ४३॥

इत्येवं मनसि विधाय हृष्टचित्तः
स्रोतस्सो द्रुतमगमत् स काशिकीयम्।

आमूलात् स्रुतनिखिलप्रहर्त्तिरेभ्यः
स्वस्थोऽभूदकृत च तांस्तथोपदेशैः ॥ ४४ ॥

स्वार्थानुकूलं परपीड़नं चेत्
स्वार्थानुसन्धानपराः कथञ्चित्।

न तद्विधानात् विरमन्ति तात्ताः
विज्ञाय चेतत् प्रकृतिं नभेध्वम् ॥ ४५ ॥

नाथः पुनारोधमतो हि साधुः
विग्रहमाणो व्यसुचत् न कान्ताम्।

तथाच यत्सा न वधार्ह एषः
नियच्छत क्रोधरिपुं शपच्च ॥ ४६ ॥

वणिक् स कान्तां जननीमिव स्वां
समर्चयन् रक्षति यत्नतस्ताम्।
यूयं यदि क्रोधवलात्कृतास्तं
निहत्य तामानयथ प्रसह्य॥
काष्ठोपजीवीति पतिं विहाया-
मकान्तवल्लभ च सार्थवाहे।
निषक्तभावेयमिति प्रवादो
जनास्यचारो न चरिष्यति द्राक्॥ ४७, ४८।

नास्यास्तथाभूतमवर्णमीश:
साढुं भविष्यामि तदत्र सर्वे।
तिष्ठन्तु धीरा: प्रतिरुद्धकोपा:
प्रत्यागमं मे प्रतिपालयन्त:॥ ४७।

कान्ता समुत्थाय पतत् द्राक्
प्रायुषती व: परिरभ्य गाढम्।
स्पर्शोऽचिरात् सान्द्रतमं समुद्यद्-
रोमाञ्चराजिर्मुदित: प्रमोदम्॥ ४८।

गुणानेवं गुरुभरश्रुतो विस्मृतस्नानपानान्
दीनान् दूनान् नयनसलिलक्षालिताद्रीननाथ।
निर्भिन्नाभान् मुखरितदिशो घोरचीत्कारशब्दै:
दृष्ट्वार्को व्यथितहृदयोऽधोमुख: खं जहाति॥४९।

यूयं देहस्थितिविहितये यात, किञ्चिन्मदर्थं
भक्ष्यं पेयं समुपनयत स्वल्पयत्नेन लभ्यम्।

निश्चिन्ताय स्वपित भवतां शल्यमुद्धर्त्तुकामः
प्रस्थास्येऽहं रजनिविगमे प्रीतिपूर्व्वं पुरं तत् ॥ ५० ॥

इति श्रीश्रीवल्लभचरिते महाकाव्ये चित्तोद्धरणो-
द्योगो नाम त्रयोदशः सर्गः।



## चतुर्दशः सर्गः ।

क्रोधजाभिभवरोधनाच्चमो
   जायते मम घृणास्पदं शनिः ।
कोऽत्र वा भवति भक्तिभाजनं
   यो रिपून् न नयते * शरीरजान् ॥ १ ॥

आवहन्नपि तथाविधं शनिः
   क्लेशमेष बहुमन्यते मया ।
यदसौ प्रतिददाति मेऽधुना
   कीटवेधरहित सलाभ तत् † ॥ २ ॥

सर्व्वशक्तिपरिभावि शनीत्वं
   वेद्मि नेति नच किन्तु शनेस्तत्
शान्त्यमङ्गलमपह्नुच कार्य्यं
   चिन्तयन्नधिगतोऽस्मि हि भीतिम् ॥ ३ ॥

शक्यते नहि शनैर्निपीड़नं
   सोढुमब्धिसुतया, क्रमेण नः ।
सह्यमेवमनिपीडहन्ति तत्
   दुह्यति प्रतिपदं यथेच्छया ॥ ४ ॥

इत्यमस्तमितधैर्य्यमवार्य्यं
   सौरिकार्य्यमवधार्य्य विपगः ।
भूप एष महसा वनमाला-
   च्छन्नतीरमगमत् लवणाब्धिम् ॥ ५ ॥

---

* "कर्मले चाहटीरे कर्मणि" इत्यात्मनेपदम् ।

† चतुर्दशसहीता तां दिनाम् ।

केतकीकुसुमसङ्गसुगन्धी
नर्त्तयन् सरलतालतमालान्।
मारुतोऽब्धिपयसां कणवाही
सेवितस्तमकरोत् गतखेदम्॥ ६॥

उत्पतत्पतदनाविलवारेः
श्यामले वपुषि तस्य पयोधेः।
फेणराजिमवलोक्य च राज्ञा
सस्मरे हरितनौ वनमाला॥ ७॥

वीचिबाहुमतिलोलमम्बुधिः
प्रेरयंस्तटभुवि प्रसारितम्
पण्यराशिमपहृत्य सत्वरं
मद्रवन्ननुसरद्भिराकुलैः;
नैगमैः प्रतिहृतावशेषितं
प्राक् निपात्य सलिले निमज्जयन्
दुःखितेऽपि नृपचेतसि क्षणं
नन्दथुं निरुपमं व्यजीजनत्॥ ८॥

नौषु नैगमगणांस्त्वरमाणान्
पण्यमावपत आकुलनादम्।
तांश्च एवमवरोदयतः कान्
दृष्टवान् नरपतिः सहहास्यम्॥ ८॥

वाहिनीशतसहस्रपरीतं
भूभृतां शरणमेनमभीति।
पश्यतोऽस्य जलधिं बहुसत्त्वं
स्वा दशा स्मृतिमगाच्च पुराणा * ॥ १० ।

चयितजीवनमक्षयवधूसुखा-
नलसमेष्टवियोगजवह्निना।
जलधिमुत्कलिकाशतसंकुलं
स्वमिव सोऽयमबोधि महीपतिः † ॥ ११ ।

सन्ध्येव रक्ताम्बरधारिणी द्राक्
तारानुरक्ता विधृताक्षमाला।
जटाः पिशङ्गीर्दधती च काचित्
तपोधना तं नृपमाससाद ॥ १२ ।

उवाच चैनं वद भद्र! कस्त्वं
कथं सुरम्यां नगरीमहासीः?
इहासि कस्मात् वणिजां कठोरैः
घोषैः समुद्वेजितकर्णरन्ध्रः ॥ १३ ।

---

* वाहिनीनां सेनानां महीनाञ्च प्रत्येकं सहस्रैश्च परीतम् पक्षे परीतञ्च भूभृतां पर्वतानां अभीति शरणं पक्षे अभीतेः शरणम् बहुसत्त्वम् पक्षे बहुसत्त्वं एनं जलधिं पश्यतः अस्य पुराणा दशा स्मृतिम् अगाच्च।

† अयं स महीपतिः जीवनम् अक्षयवधूसुखानलसमः बहुवारिपूर्णम् च इष्ट वियोगज चिन्तावियोगसम्भूत वह्नि तेन चयितजीवनम् चयितं जल जीवितञ्च यस्य 'स उत्कलिकाशतसंकुलं विरहचिन्ताशताकुलं इति संकुलम् जलधिं स्वम् स्वमिव आत्मानमिव अबोधि ज्ञातवान्।

त्वद्भावमालोक्य समर्थयेऽहम्
प्रनष्टमन्विष्यसि किञ्चिदिष्टम् ।
पृच्छामि किञ्चित्, यदि तद्रहस्यं
न स्यात् तदाख्याह्यनिगूढतत्वम् ॥ १४ ।
इदं वयो रूपमिदं तवायं
वेशश्च निष्ठारहितं मनश्च ।
न संवदन्त्येव परस्परं, तत्
मन्ये तथा नासि यथासि वेशे ॥ १५ ।
कश्चित् वणिक् तं वणितामपार्यीत्
अन्वेष्टुमेनां किमिहागतोऽसि ।
अत्यद्भुता भद्र कथा तदीया
शृणु स्थिरात्मा ननु कथ्यते सा ॥ १६ ।
कषायरक्तं वसनं वसाना
कपर्दिनी पत्युरिवानुकारे ।
गौरीव साक्षात् प्रणमच्छिरोभिः
सांयात्रिकैः पूजितपादपद्मा ॥ १७ ।
निरुद्धचन्द्रप्रतिमाननायाः
न कुट्मलं यद्यपि नातिफुल्लम् ।
तस्या नवं यौवनमम्बुजाख्याः
पुष्पं विकाशोन्मुखमन्वकार्षीत् * ॥ १८ ।
तथापि तस्यां वणिजश्च हृत्तिम्
जह्नुर्जरत्यामिव मातरीव ।

* अनुकृतवत् ।

सन्तापिनो सत्यपि निर्वृतेवा-
पत्यैः परीतेव निनाय कालम् ॥ १९ ॥

कार्त्तान्तिकः कोपि नृपाय गत्वा
न्यवेदयत् काचिदिहास्ति नारी।
करोति यस्यामनुरागिणीं स्वे
ससागरा भूर्ननु तस्य हस्ते ॥ २० ॥

अन्विष्य राजा निपुणं समन्तात्
श्रिये तरौ तस्य च नैगमस्य।
ददर्श कार्त्तान्तिकदर्शिता तां
दृष्ट्वा च तं नैगममित्युवाच ॥ २१ ॥

नार्य्यानया मे सुमहद्धि कार्य्यं
साम्ना च दानेनथ विग्रहेण।
ग्राह्येयमेतत् विदुषा त्वया तत्
यदात्मनीनं क्रियतां विचार्य्य ॥ २२ ॥

इत्थं नृपेणाभिहितः स साधुः
मत्वाह तं मर्म्मणि ताड़ितः सन्।
सम्राज एषा सुगृहीतनाम्नः
श्रीवत्सराजस्य च धर्म्मपत्नी ॥ २३ ॥

राज्यात् च्युतोसौ शनिपीड़नेन
साध्व्यानया काननवासमागात्।
इयं हि साक्षात् हरणर्थ्यपत्नी
दयाम्बजैवेति निबोध देव ॥ २४ ॥

इत्थं ब्रुवत्येव च साधुवृत्ते
तस्मिन् दुरात्मा प्रतिभाबलेन ।
उवाच राजा शृणु सार्थवाह !
येनासि दण्डेन विना विमुक्तः ॥ २५ ।

श्रीमानशेषाधिपतिभर्तृमौलि-
रत्नांशुनीराजितपादयुग्मः ।
प्राग्देशराजः खलु सार्वभौमः
लेखेन मामादिशदेवमद्य ॥ २६ ।

श्रुत्वेति राजा स्वगतं व्यगादीत्
कार्त्तान्तिकोयं महतो भयस्य ।
स्थानं, न पत्रं प्रहितं मयैतत्
प्रकाशमूचे भगवत्यथेति ? ॥ २७ ।

तपस्विनीवेशतिरोहितात्मा
राज्ञो हृता केन च नैगमेन ।
श्रुतं मयासौ तव राजधानीं
वाणिज्यकार्याय गतः सवर्गः ॥ २८ ।

तत् पत्रपाठस्य विराम एव
तस्याः प्रियाया निजराजधान्याम् ।
प्रवेशकालस्त्वमवश्यनेयो
यत्नेन साधुर्न च दण्डनीयः ॥ २९ ।

प्रयाणकैस्तावदहं यतिष्ये-
ऽप्यच्छिन्नैर्वेहं स्वे नगरं प्रयातुम् ।

स्वल्पेन कालेन, दिनान्यमूनि
यत्नेन कान्तां परिपालयेति* ॥ ३० ।

निशम्य वाक्यं परिशुद्धभावा
दुरात्मनस्तस्य च दुष्टभावम् ।
विवोढुमीशा न हि सा, कथं वा
दैवस्य निर्बन्धमलं निरोद्धुम् ॥ ३१ ।

चक्रे मतिं राजपुरीप्रवेशे,
राजा हि सर्वैकपराश्रितस्मिन्,
एवं प्रवृत्ते किमहं करोमि
मत्वेति साधुं चरणौ सुशान्तम् ;
तदन्तमाज्ञाय विशिष्टवाग्भिः
दुर्दैवयुक्ता पतिसङ्गमोत्का
प्रहृष्टवर्या परिचारिकाभि-
रवेक्षिता राजपुरीं विवेश ॥ ३२, ३३ ।

दिनेषु गच्छत्सु नृपास्यरन्ध्रात्
यो निर्गतस्तीक्ष्णविषो भुजङ्गः ।
तेन प्रदष्टा नृपभामिनी सा
सुमूर्च्छ्य साध्वी न्यपतच्च पृथ्वीम् ॥ ३४ ।

हा विपत्स्वाम्मि दुराशयेन
नान्योऽस्ति मुक्तेर्मरणादुपायः ।

---

* चलिष्ये, निरतर्ते, प्रयास्ये: गमने वहन् रूपम् स्वल्पेन कालेन ते तव मतर्रं प्रयातुं यतिष्ये ।

इति प्रधार्य्य क्षितिपालपत्नी
देहं निचिक्षेप समुद्रनीरे ॥ ३५ ।
अहो किमन्यत् कुरुते वराकी-
स्युक्त्वा नृपः प्राप विषादहर्षौं ।
श्रुतं मया यत् श्रवणीयमम्ब !
तद्गच्छ गच्छेति च तां जगाद ॥ ३६ ।
"वचस्व साधो ननु सावशेषं
प्रशान्तचित्तः शृणु तत् नरेश !" ।
"एषोऽस्मि शुश्रूपुरलं विलम्बं
मूयाः" "निशाम्य * प्रहत वदामि" ॥ ३७ ।
भूतेन केनाप्यनिरूप्यरूपे-
णोत्क्षिप्य भूपाय ददे वराकी ।
राजा पुनस्तां यतते स्म हस्ते
कर्त्तुं सतीं स प्रतिकूलभावाम् ॥ ३८ ।
प्रसाध्यमानाप्यखिलैरुपायैः
यदैयमस्मिन् न बबन्ध भावम् ।
तदा वशीकारविधानदक्षो
राज्ञा द्विजः कश्चिदहो न्ययोजि ॥ ३९ ।
वशीकृतिर्मन्त्रबलेन ह्याहा
सतीत्वसर्पः किल रुद्धवीर्य्यः ।
नताननोऽभूत्, नृपतिं सती सा
प्रेमाभिधानेन बबन्ध राज्ञा ॥ ४० ।

* निशाम्य—शृणु।

सेयं समायाति नरेन्द्रकण्ठं
दोर्वल्लिपाशेन दृढं निबध्य।
निर्लज्जता मूर्त्तिमतीव साक्षात्
समुद्रतीरे परिचारणार्थम् ॥ ४१ ॥

पश्येत् कदाचित् यदि मां नृपेन्द्र
कर्णेजपेयं वदतीति मह्यम्।
क्रुध्यत् भृशं तत् गमने मठाय
विधीयतां मेऽनुमतिर्महात्मन् ॥ ४२ ॥

सम्भाव्यतेऽस्मिन् यदि देवि! चिन्ता
शीघ्र, गुणावन्ध्यगुणज्ञता वा।
निदर्शनेऽस्याः पतिदेवतानां
नत प्रियाया व्यभिचारदोषः ॥ ४३ ॥

यथोदधेरस्य पुरोहि गोष्पदं
यथा हि पादः पुरतो महागिरेः।
श्रियः पुरः सूर्य्यसुतो यथा तथा
क्रिया सतीत्वस्य पुरोभिचारिको ॥ ४४ ॥

धर्म्मोपदेशं प्रददासि वदं
सतां हि वाणी गुणमेव वक्ति।
यानि परेषामहितं विधत्ते
पतिं परं सेवत एव साध्वी ॥ ४५ ॥

विषप्रवर्षं यदि चन्द्रतः स्यात्
अमृतधारिस्विमियात् क्षितिश्चेत्।

खलोऽनुतिष्ठेत् यदि साधुकार्य्यम्
तथापि साध्वी न पतिं विजह्यात् ॥ ४६ ।

अदेयमेतत् न वचस्त्वदीयं
प्रयाहि दूरं, नृप एति भद्रे ।
सा तापसीत्थं गदितैव राज्ञा
विपश्चिच्चित्तेव तिरोदधे द्राक् ॥ ४७ ।

तस्यां गतायां नृपचक्रवर्त्ती
दध्यौ मनस्येवमपास्तधैर्य्यम् ।
प्रष्टव्यते कारणमत्यमस्याः
मिथ्याभिधाने न मया विचार्य्यं ॥ ४८ ।

तदा शनिः किं कृतकार्य्यतां गतः ?
बलस्य भावं नृपतौ प्रियाज्ञया ?
इदं परं भावयतोपि पश्य मे
विशुष्यति द्राक् रसधातुरात्मनः ॥ ४९ ।

प्रभुत्वमेकातपवारणं गतम्
पुरो समुच्छेदमितामरावतो ।
तथापि चिन्तेत्युतिसर्व्ववैभवो
ममास्ति चिन्तामणिरित्यनाकुलः ॥ ५० ।

योऽहमेकचर एव हस्तिनां
यूथमस्मि विनिरोद्धुमीश्वरः ।
तत्र जीवति मयि त्रिलोकेश्वरे
च्छद्मना तमिममब्धिदुर्लभम् ;

दूषयन् मणिमसौ नृपाधमो
　युक्तदण्डमनवाप्य यास्यति ?
न चमेऽस्य ननु तादृशीं कदा
　दुष्कृयां कृतवतो विजानतः ॥ ५१, ५२ ।

कस्य रत्नममलं छलात् यशो-
　ऽदूषयः स्मरयशाहतः स्मर ।
रक्षितो भव विमूढ़ सैनिकै-
　रद्य नास्ति नरकाक ! निष्कृतिः । ५३ ।

एकलोऽस्मि ननु तेन किं भिया
　सिंह एकचर एव वारणान् ।
हन्ति योतगणनांस्तथा रविः
　संहणोति मघवोड़ुजालकम् ॥ ५४ ।

नास्ति सैन्यमसिरम्बुदद्युति-
　र्नास्ति, तेन किमहो प्रयोजनम् ?
एष एव यमदण्डसोदरो
　बाहुदण्ड इभकुम्भसन्निभे ;
तस्य मूर्द्धि हरिवत् समापतन्
　तं कृतान्तभवनं सुदुर्मदम्
प्रापयत्ववनिरस्तु सर्व्वथा
　पापभारविनिमुक्तनिर्वृता ॥ ५५, ५६ ।

इ्रां लंकोविचनात् प्रनैयरक्ततव्यान्ताम्कारे भवे
　यां तारामचलामचिन्तयमहं दिङ्निर्णयैकृन्नलाम् ।

सा भीमा ननु वञ्चनापटुरियं तीव्रा श्मशानोत्थिता
सञ्जाता मम भाग्यविप्लववशात् उल्कोति नाज्ञासिषम् ॥ ५७ ।
साध्वीत्वं खलु तेजसां सुमहतां राशिर्मया ज्ञायते
स्वल्पेनाप्यभिचारमन्दमहसा किं तत् तिरोधीयते ।
किं दीपेन रविस्तमिस्रकरिणः संहारकः सिंहवत्
दीप्त्या सम्रियते कदापि वद रे गोचाग्रये बन्धकि ॥ ५८ ।
तत्[†] ते नास्ति ततस्त्वया पतिकुलं शङ्खेन्दुकुन्दोज्ज्वलं
घोरेऽवर्णमहाम्बुधौ चलमते ! भाग्याश्रया मज्जितम् ।
श्रीवत्सो नृपतिर्विलुप्तविभवो यत्तेऽभवत् भाजनं
विद्वेषस्य, न तेन ते स्तुतिपदे निन्दां करोमि स्वयं ॥५९ ।
यस्यास्त्वाखिलविश्वमुज्ज्वलयतो रात्रिंदिवं शुभ्रया
कीर्त्या कीर्त्तिविलोपिनी कृतवती गर्ह्यां क्रियामीदृशीम् ।
स्थाने तत्र भवादृशश्चलमतेः, कायात् सम्मागतो
भ्रष्टा पश्यति भर्त्तुरिष्टमथवानिष्टं स्वराज्या वधूः ॥ ६० ।
सम्भागः खलु ते समाप्तिमगमत् पापेऽधुना गण्यतां
श्रीवत्सो ननु पुंश्चलीपतिरिति प्राप्तापकीर्त्तिर्न वा ।
जीवत्येव, ननैयमस्य दयिता चिन्ताभिधाना च ता
वेश्यावृत्तिमुपेयुषीति महती कुत्साप्युपेक्ष्या मया ॥ ६१ ।
तत् स पापकृत[‡] निपात्य नृपशुं त्वां केशपाशे दधत्
गम्भीरे कमलाप्रसूतिसलिले मग्नो भविष्याम्यहम् ।

---

* पञ्चाङ्क ! कुलटे !, चिन्तासम्बोधनमेतत् । † तत् साध्वीत्वम् ।

‡ पाप कृतवान् इति पापकृत् यम् ।

दूषयन् मणिमसौ नृपाधमो
　युक्तदण्डमनवाप्य यास्यति ?
न चमेऽस्य ननु तादृशीं कदा
　दुष्क्रियां कृतवतो विजानतः ॥ ५१, ५२ ।

कस्य रत्नममलं कुलात् पयो-
　ऽदूषयः स्मरशराहतः स्मर ।
रक्षितो भव विमूढ़ सैनिकै-
　रद्य नास्ति नरकाक ! निष्कृतिः । ५३ ।

एकलोऽस्मि ननु तेन किं भिया
　सिंह एकचर एव वारणान् ।
हन्ति वीतगणनांस्तथा रविः
　संहरोति महयोड़ुजालकम् ॥ ५४ ।

नास्ति सैन्यमसिरम्बुदद्युति-
　र्नास्ति, तेन किमहा प्रयोजनम् ?
एष एव यमदण्डसोदरो
　बाहुदण्ड इभकुम्भसन्निभे ;
तस्य मूर्ध्नि हरिवत् समापतन्
　सं कृतान्तभवनं सुदुर्मदम्
प्रापयत्नवनिरस्तु सर्व्वया
　पापभारविनिर्मुक्तनिर्वृता ॥ ५५, ५६ ।

इत्थं लक्ष्मीवचनात् घनैधरकृतध्वान्तान्धकारे भवे
　यां तारामचलामचिन्तयमहं दिङ्निर्णयेषूज्ज्वलाम् ।

सा भीमा ननु वञ्चनापटुरियं तोव्रा श्मशानोत्थिता
  सञ्जाता मम भाग्यविप्लववशात् उल्केति नाज्ञासिषम् ॥ ५७ ।
साध्वीत्वं खलु तेजसां सुमहतां राशिर्मया ज्ञायते
  स्वल्पेनाप्यभिचारमन्त्रमहसा किं तत् तिरोधीयते ।
किं दीपेन रविस्तमिस्रकरिणः संहारकः सिंहवत्
  दीप्तया संत्रियते कदापि घट रे नोचाशये बन्धकि* ॥ ५८ ।
तत्† ते नास्ति ततस्त्वया पतिकुलं शङ्खेन्दुकुन्दोज्ज्वलं
  घोरेऽवर्णमहाम्बुधौ चलमते ! भोगाशया मज्जितम् ।
श्रीवत्सो नृपतिर्विलुप्तविभवो यत्तेऽभवत् भाजनं
  विद्देषस्य, न तेन ते स्तुतिपदे निन्दां करोमि वृथा ॥ ५९ ।
यच्चास्याखिलविश्वमुज्ज्वलयतो रात्रिंदिवं शुभ्रया
  कोर्त्या कोर्त्तिविलोपिनीं कृतवती गर्ह्यां क्रियामोदृशीम् ।
स्थाने तच्च भवादृशस्वलमतेः, कावाल सद्यागतो
  भ्रष्टा पश्यति भर्तुरिष्टमथवानिष्टं स्वराज्ञी वधूः ॥ ६० ।
सम्भोगः खलु ते समाप्तिमगमत् पापेऽधुना गच्छतां
  श्रीवत्सो ननु पुंश्चलीपतिरिति प्राप्तापकोर्त्तिर्न वा ।
जीवत्येव, नवेयमस्य दयिता चिन्ताभिधाना चला
  वेश्याहस्तिसुपेयुषीति महती कुत्साप्युपेक्ष्या मया ॥ ६१ ।
तत् तं पापकृतं‡ निपात्य नृपशुं त्वां केशपाशे दधत्
  गभीरे कामलाप्रसूतिसलिले मग्नो भविष्याम्यहम् ।

---

* चञ्चलि ! कुलटे !; चिन्तासम्बोधनमेतत् ।            † तत् सान्वीत्वम् ।
‡ पापं कृतवान् इति पापकृत् तम् ।

इत्युक्त्वा नृपतिः समीक्ष्य पुरतो यान्तं प्रतिच्छन्दिनं
चिन्ताखिङ्गितविग्रहं कलुषया दृष्ट्या क्षणं तस्थिवान्॥६२॥
सर्व्वं तथ्यमहो अहो नु बत भोः स्वप्नो नु माया नु वा
रे पापाशय ! तिष्ठ तिष्ठ नरकिन् मायान्ध ! मायात्मक !,
पश्येमं भुजदण्डमुद्यतफणं श्रीवत्सदण्डाहतं
धावन्तं तव दंशनाय भुजग, नाशाय सज्जो भव ॥ ६३ ॥
निष्पापा रक्षिवर्गाः किमिति चलदृशः सम्भ्रमात् याथ यूयम्
निर्दोषाणां शिरःसु प्रपतति न कदा बाहुदण्डो मदीयः।
सोऽहं श्रीवत्सराजो मम खलु दयितां छद्मनादूषयत् य-
स्तं पापं भूपरूपं प्रदशनविगुणं ख्यानमन्वेषयामि ॥६४॥
इत्युक्त्वा नेत्रनीर्व्यञ्ज्वलदनलशिखादग्धदेहे जनौघे
वाह्यावातप्रकीर्णं द्रुतवति सभयं लब्धमार्गः स राजा।
सुप्त्वा निष्पिष्य गात्रं तदहितनृपतेर्भीतभीतात्त चिन्तां
धृत्वा कण्ठे चलाङ्गीं जलनिधिसलिले द्राक् पतन् मज्जितस्म॥६५

इति श्रीश्रीवत्सचरिते महाकाव्ये मायासमुद्रप्रवेशो
नाम चतुर्दशः सर्गः।

•

पापाया देहभारं न वहतु वसुधातःपरं सारमेयाः
जीवन्तीं रज्जुबद्धामवनिनिपतितां भुञ्जतां तां निकामम् ।
मन्ये तत्पापवह्नेः प्रबलतरशिखाप्लुष्टनिःशेषवारि-
र्यातोऽम्भोधिर्मरुत्वं क नु खलु कमले ! प्रहुता सा पिशाची ॥६॥

इत्यपास्तधृतिरद्दसुत्सृजन्
रोषरक्तनयनः सवेपथुः ।
गन्तुमिच्छुरथसिन्धुकन्यया
सस्मितं नृपतिरभ्यधायि सः ॥ ७ ।

धिक् पतिं जनकनन्दिनीं पुन-
र्गां गतामिव पतिव्रतामिमाम् ।
सोरिपा विकृततनुविरथ यो
मत्समचमिति वक्तुमिच्छति ॥ ८ ।

तात ! ते न वचसा प्रदूष्यते
तच्चरित्रममलं स्वभावतः ।
किं रजोभिरनुपव्यते कदा-
प्युद्धतैः प्रकृतिनिर्मलं नभः ॥ ९ ।

गाङ्गमम्बु हरिपादपद्मजं
नीललोहितजटाधृतं शुचि ।
किं कदापि मलदूषितं भवेत्
नष्टपावनविचित्रशक्ति वा ॥ १० ।

भीषणैर्विषधरैरिवोर्मिभिः
संकुलं चलदनेकयादसम् ।

तालनद्धतटमम्बुधिं पुरा
पश्यति स्म यमिहेत्य धन्वनि* ॥ ११ ॥

सूर्य्यसूनुकृतया च मायया
धन्वनीह भवतस्तदात्मिका ।
जायते स्म ननु वत्स मोहनो
भ्रान्तिराहतविवेकवैभवा ॥ १२ ॥

या समेत्य धृततापसीव्रता
तुभ्यमद्य सकलं न्यवेदयत् ।
सौरिरेव बहुमाय आत्मनः
कार्य्यसाधनपरस्तयाभवत् ॥ १३ ॥

पुत्रदारसुखभावभावके-
ऽतात्त्विके धृततदात्मचिन्तनः ।
लोक एव हरिमायया यथा
जीवनं नयति सौख्यदुःखतः ॥ १४ ॥

एवमेव शनिमायया भवान्
लोकयन् प्रियतमामतात्त्विकीम् ।
सेयमित्यनुपपन्नसंशयः
क्रोधवेगविकृतेन्द्रियोऽभवत् ॥ १५ ॥

या सदैर्ष्यति सुत ! प्रियां प्रियः
सैव सङ्गमपरेण चेदियात् ।
म्लान एव कुरुते तथेचिता
क्रोधविह्वलमतिं पतिं हि सा ॥ १६ ॥

---

* धन्वनि—मरुभूमौ ।

सान्यपूरुषसङ्गदूषिता
दृश्यते स्म भवतात्र सम्मुखे ।
तं निपात्य भवता निगृह्य तां
स्थान एव जलधौ न्ययाति यत् ॥ १७ ॥

यत्तु ते प्रथयितुं जगत्पतिः
सौरिमस्तकरुण न्ययूयुजत् ।
हन्त ते विकृतिकारणेऽपि तत्
नाभवत्समधैर्य्यं ! जृम्भितम् ॥ १८ ॥

ईर्षया विकृतचित्तवृत्तितां
याति पामरजनो बलोद्धतः ।
वृत्तिरस्खलितशान्तिरापदि
लाद्दयां हि सदृशी महात्मनाम् ॥ १९ ॥

वात्यया प्रतिहतः सरित्पतिः
क्षुब्धता परिगतोऽपि न स्थितिम्
मुञ्चते, न च कदा मनागपि
स्वच्छतां त्यजति धैर्य्यवत्तया ॥ २० ॥

सागरेण सम एधि धैर्य्यवान्
इत्युदाहरति सर्व्वं चाशिषि ।
सौरिकल्पितमायया भवान्
धैर्य्यवत्त्वमतिसर्व्वमत्यजत् ॥ २१ ॥

भक्तिरावरितुभद्र ! सतीत्वं
नान्यतेजस इहास्ति गरीयः ।

जानतापि भवता नु महार्घ्यं
  त्यक्तमेव तदहो गुणरत्नम् ॥ २२ ॥

श्योरुवाच सदसि स्फुटमस्या
  विद्यते पतिपरत्वमनर्घ्यम् ।
यद्य तस्य विपरीतमिवास्याम्
  लोकयामि यदिह ग्रनिमाया ॥ २३ ।

नेत्ररोगवशतोऽपि हि रज्जौ
  भ्रान्तिरुद्भवति घोरमहाहेः ।
यद्वदेव हि तथाद्य परस्त्री
  सद्भ्रमो भवति नात्र विकल्पः ॥ २४ ।

इत्थमेव समवधार्य्य तत्क्षणे
  दातुमेव यदवोमधि क्षमः ।
किं विहाय वनितावधे घृणा
  ता समुद्रसलिले न्यपातयः ॥ २५ ।

आत्मघातमतिसर्व्वघातकं
  कुर्व्वते प्रतिविधीयते हि यः ।
लोककः इन्दुरविरश्मिवर्जितो
  न स्मृतः किमिति सोऽतिभीषणः ॥ २६ ।

सार्व्वभौमनृपते: प्रियामवत्
  पुत्रलोति परितः प्रसर्पतः ।

---

* अतिसर्व्वघातकम् आत्मघातं कुरुते जनाय इन्दुरविरश्मिवर्जिता या [illegible] प्रतिविधीयते [illegible] किमिति न स्मृत ॥

विभ्यदेव परिवादतो भवान्
   अत्यजत् नरकपातसाध्वसम् ॥ २७ ।
यद्यहं समुपसृत्य भवन्तं
   क्रोड़ आशु न पतन्तमधास्यम् ।
अत्र वह्निसमसैकतभीमे
   हा मरौ गततनूरभविष्यत् ॥ २८ ।
ताड़ितः प्रतिपदं यमदूतैः
   दष्टगात्रनिचयः क्रिमिभिस्तैः ।
दुर्वचं तदतिदुःसहकष्टं
   यत्र तत्र निरये त्वमयास्यः ॥ २९ ।
इत्युदीरितमिदं कमलायाः
   वाक्यमद्भुतरसं स निपीय ।
भूपतिः प्रबलवेगमनेड *
   क्रोधमित्यमवदच्च विनम्रः । ३० ।
दुष्टदेह इव घोरशिखाभिः
   प्राक् प्रयाति मनसो गुणराशिः ।
वेद्मि मातरतितीव्रविदाह-
   स्तत्परश्च समुदेति हि रोषः । ३१ ।
"यां चिन्तयामि सततं मयि सा विरक्ता"
   सा चान्यपूरुषगता पतिता च दृष्टौ ।
तस्मिन् घृणे रुधिरमांसवसोपदानो
      धीरो म्रियेै नरकपातभियेत्ययुक्तम् ॥ ३२ ।

---

* अनेड—निरहवाम् । "कर्तृस्थे चाशरीरे कर्मणि" इत्याकर्मिदत्।

याप्सीत् सुवृत्तमहिता वनिता विघोर-
संसारसागरसमुत्तरणे यद्दिनम् ।
तस्या वियोगविषदिग्धकलेवरस्य
मूर्छा न मे, तदपि नास्ति ममात्मसत्ता ! ॥२३॥

ऐन्द्रे पदे जननि ! शापवशात् महर्षे-
र्भ्रष्टयापि त्वयि जले जलधेर्विशन्त्याम् ।
हाहारवैर्मुखरिताखिलदिग्विभागो
विष्णू रुरोद विकलोऽस्तमितात्मसत्त्वः ॥ २४ ॥

तस्यास्रुबिन्दुनिकरः पतितः समुद्रे
मुक्ताफलत्वमगमत् रुदतोऽविरामम् ।
नक्षत्रतामुपगतो गगने विकीर्णो
दृष्टः क्षितौ कुमुदभावमियाय नूनम् ॥ २५ ॥

दृष्ट्वा दलान्तविगलद्विरहं तुषारैः
साम्याः वहद्भिरनिलेय समुच्छ्वसन्तः ।
उच्चाश्रवैः खगरवैः प्रविमुक्तकण्ठाः
यद्यापि सागरतटेऽनुरुदन्ति विष्णुम् ॥ २९ ॥

धैर्यं तथापि विपुलं पितुरेव विष्णोः
भित्त्वा वियोगविधुरस्य ममाद्य यातम् ।
मासाष्टकं, न गलितं नयनाम्बु मात-
र्बिन्दुप्रमं सलिलमक्षि तथाप्यधीरः ॥ ३० ॥

गिरौ पोयपे वा नगनिलयने पुष्परचिते
श्मशाने वा भौमे मनयभवने मन्दिरे च वा ।

स्तवेऽवज्ञायां वा ननु समरति यः स्मरहरो
जहौ सोऽपि क्रोधात् इतर इव धैर्यं कनखले* ॥३८॥
स तारायां नाथो जननि! यदवश्यः सुरगुरः
अशापेन्दुं क्रोधादहमपि तदा तादृशवशः।
प्रियां कर्षन् सिन्धौ न्यपतमतिरोषान्धितमना:
अमूर्थ्यं लोकं तं गणयमतिघोरं बहुव्ययम् ॥ ३९ ।
अशक्तो द्रष्टुं तामपरपुरुषासङ्गमुदितां
शनैर्मायानिघ्नोऽप्यविवमकरवं यच्च सहसा।
इष्टा तन्मूला मे दशति हृदयं ग्लानिरवशं
तदागः क्षन्तव्यं तनयकृतमित्येव जननि! ॥ ४० ।
प्रसीद मातर्वद कुत्र चिन्ता?
किं वृत्तमस्याः? म्रियते किमेषा?
एव शनैः क्रीडनकश्च भूत्वा
जीवामि कष्टेन कियच्चिरं वा? ॥ ४१ ।
इत्येवमुक्ता चितिपेन लक्ष्मीः
तमेवमाह प्रतिबोधयन्ती।
चिन्तार्थयालं ननु चिन्तया ते
सुखेन साऽस्ते वणिजां तरण्याम् ॥ ४२ ।
वरेण सूर्य्यस्य विरूपरूपा
वर्षीयसी खिञ्चितसर्व्वगात्री।
दुर्गन्धदुर्गम्यतया विदूरात्
त्यक्ता जनैर्निर्वृतिमेति चिन्ता ॥ ४३ ।

---

* कनखलम्—हरद्वारस्थ स्थानम्।

ताराभुजङ्गो भुजगः स शम्भु-
भूत्वानिशं रचति तां वरेण्याम्।
क्षुधापिपासारहिता च साध्वी
ध्यायत्यजस्रं हृदयस्थितं त्वाम्॥ ४४॥

सुखानुभूतिः स्वदतेतरां यत्
जनाय दुःखानुभवात् परं, तत्।
आजन्मसौख्योचितमीदृशं त्वां
दशान्तरं लम्भयति स्म विष्णुः॥ ४५॥

दुःखावसानं भवितास्तु नूनम्
यावत् स कालो न समैति वत्स!
तावत् चिदानन्दघनं* मनोज्ञ-
मध्यास्य कालं नय धीरचित्तः॥ ४६॥

न तत्र सौरिः सुरभिप्रभावात्
प्रवेष्टुमीशो, ननु तेन तत्र।
कृतप्रसादस्य हि देवधेन्वा
यास्यत्यनेहा† तव तात! सौख्यात्॥ ४७॥

प्रदर्शयंस्तत्पथमग्रतस्ते
विहायसा यास्यति यः कपोतः।
समागतः सोऽयमतोवरम्यः
कालातिपातेन कृतं प्रयाहि॥ ४८॥

निःश्रेयिः सुरधामरोहणविधौ, नौका भवाम्भोनिधेः
सम्सारे, दुरितक्लिष्टपान्थतमसध्वंसे च हंसस्तया।

---

* चिदानन्दघनं—पूर्णब्रह्मणः चात्मचैतन्यरोपम्। † अनेहा—काल।

भैषज्यं गदवारणे नु, रविजप्रोच्चण्डतापाहने
मेधो,मा हरिपादपद्मयुगलं विस्मारि तात! त्वया ॥४९॥

इति जलनिधिकन्या वत्सला फुल्लनेत्रं
नरपतिमुपदिश्य द्यामधिष्ठाय लीना।
स च सुरभिनिकेतं तेन पारावतेन
द्रुतगतिरगमत् तं दर्शिताध्वा क्षणेन ॥ ५० ॥

इति श्रीश्रीवत्सचरिते महाकाव्ये सुरभिनिकेतनाभि-
गमनो नाम पञ्चदशः सर्गः।

सोपानपर्व्वाणि शनैस्त्यजद्भि-
रम्भोभिरुद्दण्डसरोजसंघैः ।
क्वचित् सरः शंसति भूमिभर्त्ते
निदाघकालोऽत्र विराजतीति ॥ ६ ॥

निमग्नभूयिष्ठमृणालदण्डै-
रुच्छिन्नपर्णै र्जलधारया च ।
कह्लाररक्तोत्पलपुण्डरीकैः
क्वचिच्च वर्षागममाह वापी ॥ ७ ॥

पयोधरेभ्यो विगलद्भिरारात्
पयोभिराप्लावितभूमिभागा ।
क्वचिच्च निर्झरजा विभाति
प्रावृट् यथा सा सुरधेनुराद्या ॥ ८ ॥

स्रोतःसु वक्रं प्रचलत्सु यत्र
भुजङ्गवृत्तिं दधतः समेत्य ।
संरुद्धचेष्टा भ्रमणक्रियायां
तद्दत्तलक्ष्याः शिखिनो विभान्ति ॥ ९ ॥

काशैः क्वचित् केशरिकेशराभैः
सप्तच्छदैस्तीव्रविसारिगन्धैः ।
शरत् समेतेति धराविभागः
स्फुटाक्षरं वक्ति नृपाय तस्मै ॥ १० ॥

उत्पत्य पृष्ठे नखरैर्मृगेन्द्रै
कण्डूलगण्डं लिखति * प्रकामम् ।

---

* लिखति—कर्षति सति ।

अयात्मकण्डूतिविनोद आस्ते
क्वचित् गजो यत्र निमीलिताक्षः ॥ ११ ।

क्वचिन्नमत्प्रोन्नमदग्रहस्ता
सटां समाकर्षति केशरिण्याः ।
दन्ताग्रलग्नश्च मृगेन्द्रशावं
करेणुका नर्त्तयते प्रहृष्टम् ॥ १२ ।

समुत्फणं निःसरदग्रजिह्वं
समुत्सवोथं नकुलो भुजङ्गम् ।
पराम्रशन्तो सदयं करेण
क्वचित् विशुम्भत्यपि लेढ़ि धीरा ॥ १३ ।

क्वचित् दिवान्धत्वविपक्षयोर्हूत्
युत् कुर्व्वतोस्त्राणनिवन्धयत्नयोः ।
पिन्नोः कुलायच्युतमात्मकष्टं
ददाति काको परिरम्य शावम् ॥ १४ ।

आजन्मसंस्कारवशात् तरक्षुः
मृगे विधत्ते करजप्रहारम् ।
धेनोः प्रभावेण खुरास्तदङ्गे
पराक्रमन्ते नखरा न तस्य ॥ १५ ।

श्रृङ्गं तरक्षोः प्रहृते कुरङ्गे
द्रागेत्य श्रृङ्गेण कपलमीने ।
संस्लथलोमा स च मीलिताक्षः
पतन् क्षितौ लुण्ठति साङ्गभङ्गम् ॥ १६ ।

सोपानपर्व्वाणि शनैस्त्यजद्भि-
रम्भोभिरुद्दण्डसरोजसंघैः ।
क्वचित् सरः शंसति भूमिभर्त्रे
निदाघकालोऽत्र विराजतीति ॥ ६ ॥

निमग्नभूयिष्ठमृणालदण्डै-
रुच्छिन्नपत्रैर्जलधारया च ।
कह्लाररक्तोत्पलपुण्डरीकैः
क्वचिच्च वर्षागममाह वापी ॥ ७ ॥

पयोधरेभ्यो विगलद्भिरारात्
पयोभिराप्लावितभूमिभागा ।
क्वचिच्च निर्धूतरजा विभाति
प्रावृट् यथा सा सुरधेनुराद्या ॥ ८ ॥

स्रोतःसु वक्रं प्रचलत्सु यत्र
भुजङ्गबुद्धिं दधतः समेत्य ।
संरुद्धचेष्टा शयनक्रियायां
तद्वलभ्याः शिखिनो विभान्ति ॥ ९ ॥

काशैः क्वचित् केशरिकेशराभैः
सप्तच्छदैस्तीव्रविसारिगन्धैः ।
शरत् समेतेति धराविभागः
स्फुटाक्षरं वक्ति नृपाय तस्मै ॥ १० ॥

उत्पत्य पृष्ठे नखरैर्मृगेन्द्रे
कण्डूलगण्डं लिखति * प्रकामम् ।

---

* लिखति—कर्षति घर्षति।

भवासकण्डूतिविनोद आस्ते
  क्वचित् गजो यत्र निमीलिताक्षः ॥ ११ ।

क्वचिद्भ्रमत्प्रोच्चमदग्रहस्ता
  सटा समाकर्षति केशरिण्याः ।
दन्ताग्रलग्नञ्च मृगेन्द्रशावं
  करेणुका नर्तयते प्रहृष्टम् ॥ १२ ।

समुत्फणं निःसरदग्रजिह्वं
  स्वपुच्छबोधं नकुलो भुजङ्गम् ।
पराम्रशन्तो सदयं करेण
  कुचित् विघुक्त्यपि लेढ़ि धीरा ॥ १३ ।

क्वचित् दिवान्धत्वविपर्ययोर्धूत्
  चुम् कुर्वतीस्त्राणनिवृत्तयत्नयोः ।
पित्रोः कुलायच्युतमात्तकष्टं
  ददाति काको परिरुह्य शावम् ॥ १४ ।

आजन्मसंस्कारवशात् तरक्षुः
  मृगे विधत्ते करजप्रहारम् ।
धेनोः प्रभावेण खरास्तदङ्गे
  पराक्रमन्ते नखरा न तस्य ॥ १५ ।

शृङ्गं तरक्षोः प्रहृते कुरङ्गे
  द्रागेत्य शृङ्गेण कपत्यभीते ।
संस्तब्धलोमा स च मीलिताक्षः
  पतन् क्षितौ लुण्ठति साङ्गभङ्गम् ॥ १६ ।

मार्ज्जारिका मूषिकशावमङ्क-
गतं स्तनं पाययते प्रहृष्टा ।
क्वचिच्च तच्छाव इवाभियोक्तुं
वडक्रमः प्रक्रमते श्वशावम्* ॥ १७ ॥
श्येनश्च पारावतपोतमेकं
निपात्यमानं नभसि क्षणेन ।
क्षणाच्च शून्ये परिरक्ष्यमाणं
प्रत्यर्पयत्यक्षतमेत्य पित्रोः ॥ १८ ॥
इत्यद्भुतं पश्यत एव राज्ञः
उत्कण्टक निश्चलतारकाक्षम् ।
दयावतो सा सुरभिः प्रसन्ना
तीर्णा नभस्तः पुर आविरासीत् ॥ १९ ॥
क्षौमाञ्चिताङ्गी स्फुटनीपपुष्पैः
विलम्बिकेशा शितिमेघजालैः
सहेमहारा तडितां गुणेन
सतूर्यघोषाम्बुदगर्जितेन ;
विहङ्गमैश्चातकनामधेयै-
रनुप्रयाता मधुरं नदद्भिः
निचोलिनी† श्यामलवल्लिजालैः
सुरेन्द्रचापेन सरत्नमौलिः ;
केकाभिरानन्दनिनादिनी सा
प्रावृट् परापत्य पयस्विनीं ताम्

---

* श्वशावम्—कुक्कुरशावकम् ।  † निचोलिनी—सवसना ।

उद्वर्त्तिता लोध्ररजोभिरस्याः
शीतोपशान्त्यै शिशिरस्य लक्ष्मी ।
शुभ्रा तनुर्गैरिकधातुमिश्रा
गङ्गाम्बुधारेव विभाति रम्या ॥ २८ ।

निलीनभृङ्गेण लसन्मुखश्री-
र्वसन्तलक्ष्मीस्तिलकेन तावत्
संलापिनी कोकिलकूजितेन
मन्दोन्नतभ्रू कृतचारुहासा ;
विकाशयन्ती मुनिमध्यकाण्डे*
ऽकाण्डेऽतिमुक्तानपि† मोदयन्ती
बालार्करागारुणचारुपद्मैः
रक्तांशुकप्रावरणातिहृद्या ;
अशोकगुच्छैः कृतकर्णपूरा
"मुक्ताकलापीकृतसिन्धुवारा"
चूताङ्कुरैर्वर्द्धितरम्यभावां
पलाशमालामतिचारुवर्णाम् ;
कण्ठे च धेनोः परिधाप्य मन्दं
प्रसर्पता दक्षिणमारुतेन
नात्युष्णशीतेन गताध्वखेदां
करोति तां कामदुघां क्षणेन ॥२९,३०,३१,३२

---

* मुनिमपि अगस्त्यपुष्पमपि विकासयति च ।

† अतिमुक्तानपि माधवीकुसुमान्यपि जीवन्मुक्तानपि च ।

शुश्रूषणार्थं नृपतेश्च सर्व्वान्
सत्वान् समादिश्य तिरोबभूव ॥ ३८ ।

मृदङ्गनादं जलदेऽनुकुर्व्व-
त्यामन्द्रमातन्वति मंजु मध्वम् ।
प्रसार्य्य बर्हं परितो नरेन्द्रं
मुदा मयूरा ननृतुः सहावम् ॥ ३९ ।

गुञ्जत्सु वीणाक्वणितानुकारि-
कृतेषु रोलम्बकुलेषु मत्ताः ।
चूताङ्कुरास्वादकषायकण्ठाः
श्रोत्राभिरामं जगुरन्यपुष्टाः ॥ ४० ।

निरन्तरं ध्यायत एव विष्णुं
ध्यानप्रभावात् विगतक्षुधार्त्तेः ।
दिनान्यतीतानि कियन्ति तस्य
तस्मिंश्चिदानन्दवने नृपस्य ॥ ४१ ।

दैत्यारिपादाम्बुजचिन्तनोत्थम्
आनन्दसन्दोहमदुःखभिन्नम् ।
आस्वादयन् विस्मृतमर्त्त्यभावो
जीवन् विमुक्तोऽत्र नृपो बभूव ॥ ४२ ।

तस्मिन्नरण्ये सुरभेर्महिम्ना
रुद्धप्रवेशोपि शनिर्विदूरात् ।
मायामयं जालमवन्ध्यमायो
भूयोपि वध्युं नृपतिं ततान ॥ ४३ ।

बुद्धिप्रवृत्तिः खलु मानुषाणा-
मनुप्रयात्येव विधिं * पुरोगम् ।
तदन्यथा चेत् कथमस्य राज्ञः
स्वर्णेष्टकानिर्म्मितिवासना स्यात् ॥ ४४ ।

सुदा च धेनोः पयसाभिषेकात्
संप्राप्तया निर्म्मलहेमभावम् ।
स सूपशो निर्म्मितवान् विचित्राः
स्वर्णेष्टका भूपतिरस्तसंख्याः ॥ ४५ ।

इष्टैकदासौ नृपचक्रवर्त्ती
विमोहितः सूर्य्यसुतेन दूरात् ।
काञ्चित् तरीं शौतिपुरं प्रयान्तीं
बभूव चिन्तार्थसमुत्सुकात्मा ॥ ४६ ।

सीमामतिक्रम्य वनस्य वत्स !
पदात् पदं मास्म गमः कदाचित् ।
इत्यन्वगात् सा सुरभिर्नृपालं
शनैश्चरोपप्लववारणाय ॥ ४७ ।

विलङ्घ्य तच्छासनमेव राजा
यत् व्यत्यगात् तद्वनभूमिसीमाम् ।
तत्रैव हेतुः खलु मानुषो धी-
र्भवत्यपाये परिमोहिणीति ॥ ४८ ।

प्रियावलोकेन समुत्सुकात्मा
यद्विर्वनादाक्रमणाय सौरिः ।

---

* विधि—दैवनिर्बन्धम् ।

समर्थं इत्येवमपि प्रजानन्
नृप स वेला जलधेरियाय ॥ ४९ ।
समेत्य नौका तटमानयेति
पुन पुनर्नाविकमाजुहाव ।
तस्मिन् तथा कुर्वति नैगम त
नौकाधिनाथस्य जगाद नम्र ॥ ५० ।
साहायक सौतिपुर यियासो
कुरुष्व साधो ! मम दुर्गतस्य ।
सन्तोष्टका मे कलधौतमय्या
नौका समारोपय ता दयार्द्र ॥ ५१ ।
तद्विक्रयात लब्धधनार्हयोध्य
शक्तोऽधुनाय कुलजा विपन्न ।
निस्तस्तपस्तोति दयार्द्रचेता
सपरिजात नय मा स्वयानम् ॥ ५२ ।
इत्येवमुक्त सद्धि सार्थवाह
ता वाहिता स्वर्णमयी स्वभृत्यै ।
आरोह्य नौका नृपतिश्च झट
समादिशत् तत्परिचालनाय ॥ ५३ ।
आरुह्य नौका नृपति स लक्ष्मरा
निर्दिष्टरूपा प्रसमीक्ष्य चिन्ताम् ।
कयश्चिदोटे स्म मनोविकारं
वोढु तया धाम्यमवेक्ष्यमाण ॥ ५४ ।

तां दृष्टवा वीक्ष्य वणिक् प्रलुब्धः
चकार बुद्धिं नृपतेर्विनाशे ।
प्रभ्रंशयामास च तं तरण्याः
सिन्धौ समुत्तालतरङ्गमाले ॥ ५५ ॥

तया महिष्या तदवस्थयापि
विधित्सया तद्वसमोपयान्तेः ।
अलक्ष्यपातं वहनानुकूलं
निचिक्षिपे द्राक् लघु काष्ठखण्डम् ॥ ५६ ॥

नृपस्तदालम्ब्य स्वयंच पाथसां *
निमग्नमुन्मग्नमनारतं वपुः ।
दधत् स्मरन् दैत्यरिपोः पदाम्बुजं
क्षणात् परं कीर्तिपुरं समासदत् ॥ ५७ ॥

स तत्र जीर्णे किल पुष्पकानने
क्वचित् तरङ्गैः प्रबलैर्महाम्बुधेः ।
अपीततत्क्षारपयाः मनाक् नृपो
निचिक्षिपेऽविघ्नमलुप्तचेतनः ॥ ५८ ॥

व्यतीतबाधं नृपतेः शुभागमात्
समुद्गतैर्नूतनचारुपल्लवैः ।
बहुप्रकारैः कुसुमैः सुगन्धिभिः
विभूषितं तत् वनमाबभौ पुनः ॥ ५९ ॥

अशोकगुच्छैः स्फुटकिंशुकैर्जवा-
सुमैः † कुसुम्भप्रमुखैः सुमोदितैः ।

---

* पाथसां—जलानाम् । † जवासुमै—जवापुष्पै ।

क्वचित् समीरेण चलद्दलालिभि
ज्वलद्दवाग्नीव रराज तत् वनम् ॥ ६० ।

यूथीभिरानन्दितषट्पदालिभि-
शेफालिकाभिः पतिताभिराकुला ।
प्राक् विच्छगाचो मकरन्दधारया
रेजे क्वचित् शुक्लपटाहृतेव भूः ॥ ६१ ।

एतत् मदीयं कुसुमं न तावकं
मा पाहि पुष्पेऽत्र सुधा त्वया सखे ।
इत्येवमन्यान्यविवादतत्परः
पुष्पं च पुष्पात् निपतत्यलिव्रजः ॥ ६२ ।

वसन्तलक्ष्म्या बहुधाऽऽत्मयोग्या-
मानम्बरा पर्ण्ण निहिते पदे द्राक् ।
द्विरेफझङ्कारमिषेण तस्याः
मञ्जीरमञ्जुक्वणनं बभूव ॥ ६३ ।

वसन्तविस्तारितशोभभारात्
प्रोत्फुल्लरक्तोत्पलराजि रम्यम् ।
तरङ्गित धीरसमीरसङ्गात्
चिरात् वभौ तत्र सरः सुतोयम् ॥ ६४ ।

आनर्त्तयन् कुसुमिता विविधाश्च वल्लीः
आपूर्णयन् वकुलमाकुलयंश्च भङ्गीः ।
मन्दं वहन् मलयगन्धवहः सुगन्धः
पौष्पं रजो दिशि दिशि व्यकिरत् प्रभूतम् ॥६५।

तेनाङ्कूलपवनेन निषेविताङ्गी
  सा मालिनी किमिदमित्यपहाय कार्य्यम् ।
प्रक्रान्तमागतवतो* त्वरया वनं स्वम्
  आलोक्य विस्मयमगाच्च तथाविधं तत् ॥ ६६ ।
यत् काननं चिरमभूत् परिशीर्णवल्ली-
  जालं तदेवनुतपल्लव-विशोभि जातम् ।
कोवात्र हेतुरिति सा परिबोद्धुकामा
  दृष्टिं ससर्ज परितो निभृतं भ्रमन्ती ॥ ६७ ।
विचिन्वती सा निपुणं वनैक-
  देशे जटाभि: स्वयलम्बिनीभि:
कापायरक्तं वसनं वसानं
  दधानमाकारमनिर्वृतानाम् ;
स्वरेण दृग्भेऽतितरां मनोज्ञे
  सञ्जातनिर्वेदमनल्पशोकम्
मधुं तपस्यन्तमिवाप्तवर्गे
  रनुप्रयातं प्रतिषेधकामैः ;
असंयताभिर्व विशृङ्खलाभि:
  अलक्ष्यभालस्थदृशं जटाभि:
सतीवियोगेन विमुक्तसङ्ग
  तप: कठोरं खलु तप्यमानम् ;
अदृश्यरूपेण मधुप्रवृत्तिम्
  आकालिकीं प्राप्य मनोभवेन

* प्रक्रान्तम्—आरब्धम् ।

पौष्पैः शरैः म्रियमाणमारात्
पतिं पशूनामिव लक्ष्यमाणम्;
स्वाङ्गमेव पुनरेत्य विभुत्वात्
जेतुकाममिव काममकामम्
ईश्वरं धृतमुनिव्रतमेकं
विस्मिता पुरुषरत्नमपश्यत्* ॥ ६८—७२ ॥

स्तम्भितेव तमवेक्ष्य युवानम्
निश्चलावयवतामगमत् सा।
यत्नतस्तदवधूय जडत्वं
स्वैरमेत्य विदधे प्रणिपातम् ॥ ७३ ॥

शुष्कमेतदखिलं वनमेवं
जीवयन् पुनरसावनुभावः।
मर्त्यदुर्लभमिदञ्च शरीरं
स्पष्टमाह तव सौम्य! सुरत्वम् ॥ ७४ ॥

सन्निमेषमिदमक्षियुगं ते
छायया च वहति वपुरेतत्।
दिव्यता प्रतिरुणद्धि तदित्थम्
त्वत्स्वरूपमवबोद्धुमनीशा ॥ ७५ ॥

आत्मतत्त्वमतिसूक्ष्ममगम्यं
ब्रूहि सौम्य! निखिलं करुणार्द्रः।

---

* सा भामिनी विस्मिता सती विभुत्वात् पुनः स्वाङ्गमेव एत्य अकामं ईश्वरं जेतुकामं धृतमुनिव्रतं काममिव एकं पुरुषरत्नम् अपश्यत्।

तथैव श्रवणकौतुकमस्या:
वर्त्तते नहि धिया पथि तात ! ॥ ७६ ।

तामथो विहिताञ्जलिबन्धा
पुष्पलाववनिता श्रवणोत्काम् ।
विस्मयेन परवान् श्रुतवार्त्त: *
प्रत्युवाच नृपति: स्मितपूर्व्वम् ॥ ७७ ।

किं ब्रवीति भवती मदागमात्
प्रागभूत् कुसुमवाटिका तव ।
दावदग्धवदिवातिभीषणा
निस्तृणेति लपितं प्रलापवत्† ॥ ७८ ।

मामवेहि शनिकोपपीड़ितं
नष्टसर्व्वविभवं वनाश्रयम् ।
कञ्चिदेकममलान्वयोद्भव
स्वसमात्मपरिरक्षणाक्षमम् ॥ ७९ ।

केनचित् मम धनं जिहीर्षुणा
निर्दयेन वणिजा लघीयसा ।
द्राक् समेत्य जलधौ निपातनात्
किञ्चिदन्यदवले ! स्मरामि न ॥ ८० ।

---

* श्रुता वार्त्ता स्वकीयागमनस्य यत् जीर्णे वने पुनरुज्जीवनं इति परवान् येन
[illegible]ताहम ।

† मदागमात् प्राक् तव कुसुमवाटिका दावदग्धवत् अतिभीषणा निस्तृणा च
[illegible]भूत् ? प्रलापवत् इत लपितं भवती किं किमर्थं ब्रवीति।

सैन्धवे पयसि मज्जतोपि मे
नार्द्र तामुपगतं यदम्बरम् ।
तत्र मातरिव ते ममाप्यहो
चित्तमेतदनपेतकौतुकम् ॥ ८१ ।

दग्धपूर्व्वमभवत् मदागमात्
काननं रुचिरदर्शनं पुनः ।
यत्त्वयेति कथितं तदप्यहो
सम्भवत्यनुमितं न संशयः ॥ ८२ ।

इत्युपात्तवचनं नृपं पुनः
पुष्पलावनिता जगाद सा ।
कोप्यसंशयमलौकिकः पुमान्
विद्यते त्वयि कृपापरोऽनिशम् ॥ ८३ ।

तत्र यावदुपपीड़नं शनैः
यास्यति प्रणतिपूर्व्वमर्थये ।
मन्निकेतमधितिष्ठता त्वया
तावदेव समयोऽतिवाह्यताम् ॥ ८४ ।

आस्म तात ! भवता सुपुत्रिणी
त्वं मयासि सुकृतिन् समाश्रकः ।
एतु पुत्र इव लालितो मया
कालमागमयतां भवान् सुखम् ॥ ८५ ।

सुललितहितमेतत् शृण्वतः पुष्पलावी-
वचनममृतधारासन्निभं तस्य राज्ञः ।
समजनि मतिरस्याः सन्नयानेऽन्वगच्छत्
प्रकृतिमिव पुमांस्तां सांख्यनिर्दिष्टरूपः ॥ ८६ ॥

इति श्रीश्रीवत्सचरिते महाकाव्ये मालिनीसमागमो
नाम षोडशः सर्गः ।

---

## सप्तदशः सर्गः ।

अवचित्य विचित्रपुष्पराशिं
  रचयन् चारुगुणां स्रजं सुवर्णाम् ।
विदधे नृपतिः स पुष्पलाव्याः
  गुरुसाहाय्यमतन्द्रितः सहर्षः ॥ १ ॥

हरिपादयुगं निधाय चित्ते
  स्थितमित्थं परिचिन्त्य गद्गदाक्षः ।
सहसा हृतनेत्र पुष्पलाव्या
  जगदे वाक्यमिदं विपक्षया सः ॥ २ ॥

चिरमात्मनिगूहनं न युक्तं
  सुमहत् पातकमात्मनोऽपहारात् ।
अधुनापि विबोधय स्वरूपं
  प्रणिपाताञ्जलिधाचितो महात्मन् ॥ ३ ॥

चरणे च करे च लक्ष्यमाणं
  निखिलं नृपचक्रवर्तिलक्ष्म ।
न तिरोधातुमलं जटादयस्ते
  स्फुटमाह च्छलतापसत्वमेतत् ॥ ४ ॥

सुविचक्षण एष बाहुनामा
  नृपतौ राज्यमिदं प्रशास्ति सम्यक् ।
खलतां खलतामिवासतीं तां
  कृतवान् यदयं विवादमूलम् ॥ ५ ॥

अनपत्यतया चितीश्वरोऽयं
प्रियया सार्द्धमपत्यमाप्तुकामः ।
सुचिरं समराधयत् यतात्मा
जगदम्बां स्मरमोहिनीं सभक्तिः ॥ ६ ।

कियता समयेन गच्छतासौ
तनया तत्समुपासनप्रभावात् ।
नृपतिर्लभते स्म काम्यरूपां
स्मरपत्न्यपि दिवि, चितौ सनाथ्या* ॥ ७ ।

निरपत्यतया महोत्सवैस्-
तनयं पुत्रजनिं यथा नृपालः ।
अभिनन्दितवान्, चकार नाम्ना
तनयां तां शुभलक्षणाञ्च भद्राम् ॥ ८ ।

चन्द्रकेव कलनादिनी सुधात्
सञ्चरन्त्यविरतं जनात् जनम् ।
वीतबाधमपदुःखमत्यगात्
शैशवं नृपसुता क्रमेण सा ॥ ९ ।

पल्लवेष्विव नवेषु चारुणा
चित्रपुष्पनिचयेन हासिना ।
यौवनेन निदधे पदं ततो
भूपजाङ्गनिवहेषु हारिणा ॥ १० ।

जनकस्य वचः प्रमाणयन्ती
भविता सा युवती स्वयंवरा स्वः ।

* चितौ चितितले सनाथ्या आसितहृदया स्मरपत्न्यपि ।

निखिलाय नृपास्तदर्थमस्मिन्
   समवेता नगरे विचित्रवेशाः ॥ ११ ॥
सहसालिजनैर्निजप्रकोष्ठे
   विमनाः सीदति हा हताशचित्ता ।
मरणव्यवसायतो वयस्याः
   बहुकष्टेन निवारयन्ति मत्ताम् ॥ १२ ॥
तां भूपतिः* प्राह निमील्य नेत्रे
   किमित्यसौ हर्षपदे विपन्ना ?
वरं वरीष्यत्यनिषिध्यमाना
   कृताभ्यनुज्ञा गुरुणेति जाने ॥ १३ ॥
रम्भावती† तं निजगाद भूयः
   रहस्यमेतस्य निबोध तात !
श्रीवत्सराजं पतिमाप्तुकामा
   माराधयामास चिराय गौरीम् ॥ १४ ॥
तस्यै प्रतिश्रुत्य तथेति कामं
   विद्या द्वितीया प्रददौ च तुष्टा ।
चिन्तेव भर्त्तुर्भवितासि क्षुद्या
   वीरप्रसूर्येति वरद्वयं सा ॥ १५ ॥
राज्ञां परिज्ञातचरित्रवंशा
   रमेति नाम्ना प्रथितास्ति योषित् ।
तया परिज्ञापितभारमाटो
   कन्या हृणोति नृपमन्यया न ॥ १६ ॥

---

* मूर्द्ध—श्रीनृपः ।   † रम्भावती—सा पुष्पवती ; चला नामेतन् ।

श्रीवत्सराजः शनिपीड़नेन
विध्वस्तराज्यः प्रिययानुयातः ।
अज्ञातवासं वसति क्वचायं
न कोपि तत् वेत्ति नृपेन्द्रपुत्रि ! ॥ १७ ॥

तस्माद्धते सर्व्व इमे नरेशाः
समाहृता राजसुते ! निशाम्य ।
तयैवमुक्तैव पपात बाला
वल्लीव भूमौ करपत्रलूना* ॥ १८ ॥

आख्याय तत् वत्स ! निजं स्वरूपं
स्वः सार्व्वभौमस्य विचित्रवेशः ।
अधिष्ठितो मत्तमपूर्व्वरूप-
च्छटाभिरन्यान् मलिनीकुरुष्व ॥ १९ ॥

श्रीवत्सराजः शनिपीड़नेन
विध्वस्तराज्यश्छलतापसः सन् ।
वने वने पर्य्यटतीति वार्त्तां
श्रुता रमायाः प्रमुखात् मयाद्य ॥ २० ॥

तैस्तैरुपायैर्ननु वत्स ! मन्ये
नूनं स एवासि नृपाधिनाथः ।
दृष्टोसि, मा कापि बधाय नार्य्याः
ज्ञातस्वरूपः, प्रतिगच्छ तां भा !† ॥ २१ ॥

भद्राप्रभावात् शनिपीड़नं ते
निवर्त्तते वत्स ! पुराचिरेण ।

---

* करपत्रलूना—करपत्रेण (करात्) ककचेन लूना छिन्ना।    † भा—भद्रा ।

चिन्तावियोगो ननु भद्रया ते
  सुसह्यकष्टो भविता न शङ्का ॥ २२ ।
तां मालिनीं प्राह नृपो विहस्य
  प्रत्येति भद्रा वचनं न देव्याः ।
नैराश्यनिर्विण्णमतिस्तदेवं
  त्यागाय देहस्य सती प्रवृत्ता ॥ २३ ।
गत्वा त्वमेनां वद राजपुत्रीं
  प्रागिष्टलाभस्तदनन्तरं वाक् ।
विनिःसरेत् दैवतवक्त्रपद्मात्
  तत् किं मुधा खिद्यसि बालिकेव ॥ २४ ।
प्राप्तोपि देहान्तरमन्यलोके
  प्रविश्य तं कायमसौ नृपालः ।
समर्थनार्थं वचसः प्रियायाः
  समेष्यति द्राक् ननु कार्य्यकाले * ॥ २५ ।
मा संशयो भूत् वचने प्रियायाः
  अतर्कितोपायमवश्यमेव ।
भाविष्यते तेन फलान्वितेन
  न विप्लुतार्थं वचनं हि तादृशाम् ॥ २६ ।
रम्भावतीत्थं वचनं नृपस्य
  निशम्य हर्षातिशयेन मुदा † ।

---

* मृतोपि स राजा जीवतु, अवसरकाले स देहं प्राप्य देव्या वचनं सत्यं समेष्यतीत्यर्थः ।

† मुदा—वाचिता ।

जगाम भद्रासदनं सवेगं
विशृङ्खलान्दोलितकेशपाशा ॥ २७ ॥

तस्यां गतायां स हि भूमिजानिः
व्यचिन्तयत् व्याकुलचित्तमेवम् ।
अये शनिर्मे प्रतिकूलवर्त्ती
सुदुर्घटं संघटयेत् किमेतत् ॥ २८ ॥

देव्या वरोयं कथमन्यथा स्यात्
कथं निखेयो हृदि वा प्रियायाः ।
सापत्न्यगडुर्विषमोऽविपह्यः
देव्या वरो नैष, कूपोयमेतत् ॥ २९ ॥

रहस्यमुद्भेत्तुमियं च सदोषं
सुतीक्ष्णबुद्धिः कपटं व्यतानीत् ।
• • राज्ञावरोधप्रतिबद्धमोहक्
अन्यः कथं वेत्तु जनो नु गुह्यम् ॥ ३० ॥

न वेत्ति राजा, कथमन्यथासौ
श्रोतृमात्रे हि निमन्त्रणीये ।
स्वयंवरार्थे दुहितुः प्रजानन्
समाह्वयेत् वा निखिलान् नृपालान् ॥ ३१ ॥

विज्ञाय वा तं शनिपीड़नेन
नृपे निकृष्टे इति मद्भूतात् ।
प्रागास्ति सौरेन कथं स्थिरात्मा
तस्थौ निहत्यान्यवराभिलाषः ॥ ३२ ॥

---

* दमन्—कांचने ।

चिन्तेव भद्रा प्रियवल्लभले
वीरप्रसूत्वञ्च गमिष्यतीति !
वरद्वयं शैलसुता प्रसन्ना
तस्यै ददौ प्रार्थनया विनापि ॥ ३३ ॥

विपक्षनारीकृतसविभागे
सकाचिताङ्गी हृदये मदीये।
सा वत्स्यति प्रासमहाधिरेव
या साम्प्रतं हा सविकासमास्ते ॥ ३४ ॥

या नैगमेभ्य. परिरक्षसि त्वं
भूत्वा भुजङ्गो वरदेऽम्ब ! तारे ! ।
चिराय सापत्नमहाधिदूना
रक्षित्वद्या त्वदृतः पुरा सा ॥ ३५ ॥

यथा सतीलाक्रमणात् दयावति !
त्वया सतीयं परिरक्ष्यते प्रभो।
तथैव सापत्ननिबन्धनात् पुनः
सुदुस्तरात् सा व्यसनाच रक्ष्यताम् ॥ ३६ ॥

इति हि धरणिजानैरस्तधैर्येष्य देव्या.
वरमपि गिरिजाया मन्यमानस्य शापम्।
सपदि निखिलगद्गाच्छित्तये चाधिदूरैः *
शुभपरिणयगसो चारु पुस्फोर बाहुः ॥ ३७ ॥

इति श्रीयोवत्सचरिते महाकाव्ये ससुहिन्न
श्रीवत्सो नाम सप्तदशः सर्गः ।

---

* चाधिदूरैः—मम पीडाकर्तृनाय।

## अष्टादशः सर्गः ।

सोपानमार्गैः सुकराधिरोहैः
   युक्तेषु रम्येषु महोपचारैः ।
महार्हसिंहासनवत्सु रङ्गे
   तुङ्गेषु मञ्चेषु सुसज्जितेषु ;
विटेष निर्दिष्टमथो नृपाणां
   यथाक्रमं मञ्चमधिष्ठितानाम् ।
तुल्यानुरागेव रराज लक्ष्मीः
   "प्रभाविशेषोदयदुर्निरीक्ष्या" ॥ १, २ ।

पूर्वाद्रिशृङ्गेषु निबद्धपंक्ति
   यदि स्थिताः स्युर्निवहाः सुधांशोः ।
तुङ्गेषु मञ्चेषु तदा निकामं
   स्युरस्य भूपा उपमेयरूपाः ॥ ३ ।

नृपात्मजेयं यदि वेत्ति सम्यक्
   द्रष्टुं, तदात्मानमुमेव भूपम् ।
वरीष्यतीति प्रतिवीरमेवं
   सम्भावनाभूत् प्रतिराजलोकम् ॥ ४ ।

*तिरस्करिण्यन्तरितावलोका*
   पौराङ्गना कामपरासवादीत्
न स्थास्य भद्राभिनिविष्टबुद्धि
   र्द्विष्टेत् मते मे यदि सा नताङ्गी ;

प्रवर्त्तयेयं ननु तां तदाहम्
अमुं नृपं कामयितुं वरेण्यम्
रूपानुरूपावयवो य एतान्
विभाति सर्व्वानतिशय्य राज्ञः ॥ ५, ६ ।

शृङ्गारिशिल्पः परिवेल्लिताग्र-
भागः स्रवन् स्नेहमिवांसलम्बी ।
कृष्णोपि रम्यः कुटिलोपि हृद्यः
बध्नाति चित्ते ननु केशपाशः ॥ ७ ।

यथास्य वक्त्रं शतपत्रमुग्ध
तथैव नीलोत्पलकान्तिहारि ।
कर्णान्तविश्रान्तमतीव सुष्ठु
नेत्रद्वयं चञ्चलतारहारि ॥ ८ ।

अमुष्य मन्दं हसतो विभाति
रक्तेऽधरे मौक्तिकप्रभालि ।
विशुद्धवर्णा द्विजवत् द्विजालिः
हीरद्युतिर्हैम इवाङ्गुरीये* ॥ ९ ।

प्रवालरक्तोदरमस्य पाणि-
पादं मुहुः सञ्चलदङ्गुलीकम् ।
नवोपमा रञ्जितमध्यभागं
चलद्दलं पद्ममिवातिभाति ॥ १० ।

---

* हे शान्ति! सखि! मन्दं हसतः अमुष्य राज्ञः रक्ते अधरे मौक्तिकप्रभालि, द्विजवत् ब्राह्मणवत् विशुद्धवर्णा विशुद्धजाति पक्षे विशुद्धकान्तिः द्विजालिः दन्तपङ्क्तिः, हैमे सौवर्णे अङ्गुरीये हीरद्युतिः हीरकज्योतिरिव विभाति।

यथारुचोत्थं खलु तस्य राज्ञः
सौन्दर्य्यसंवर्द्धनतत्परायाम् ।
आरब्धकार्य्यान्तमयातवत्यां
तस्यां वत प्रौढ़पुराङ्गनायाम् ;
आदेशयिष्यन्निव शक्रपत्न्यै
स्वयंवरक्षोभनिवारणाय ।
एकोऽति तारः पटहप्रणादः
प्रध्मातशङ्खो गगनं बिभेद ॥ ११,१२। युग्मकम् ।

रमायतो वेत्रकरा पुरस्तात्
पश्चाच्च रम्भा वरमाल्यहस्ता ।
तयोर्वभौ मध्यगता कुमारी
विशाखयोश्चान्द्रमसीव लेखा ॥ १३ ।

क्रमेण भद्रा कविभारतीव
लसद्विभूषा सगुणा रसाढ्या ।
सुवर्णविन्यस्तपदातिहृद्या
"विवेश मञ्चान्तरराजमार्गम्" ॥ १४ ।

तां सागराणामिव चन्द्रमूर्त्तिं
समग्रमालोकयतां विलङ्घ्य ।
पयांसि वेलामिव धैर्य्यसेतुं
समुल्लसन्ति स्म मनांसि राज्ञाम्* ॥ १५ ।

---

* चन्द्रमूर्त्तिं समग्रम् आलोकयताम् सागराणां पयांसि वेलाम् विलङ्घ्य यथा समुल्लसन्ति तथा तां समग्रं विलोकयतां राज्ञां मनांसि धैर्यसेतुं विलङ्घ्य समुल्लसन्ति स्म ।

अनेन नेत्रेण सुदुश्चरं तपः
  कृतं पुरा, यत् नृपनन्दिनीमिमाम् ।
अवारितं पश्यति सालकानो-
  ज्ज्वलामिवोद्यानभुवं सुजातिकाम्* ॥ १६ ॥
पुरा कृतं पुण्यममन्दभाग्यता
  जनातिगा वा सुभगत्वमस्य मे ।
गणो गुणानां निकषोपलोपमे
  परोक्षमस्मिन् ललनाललामनि ॥ १७ ॥
दृशामिमां नेत्रशतैकदृश्यां
  द्रष्टारमक्षिद्वयसङ्गतञ्च ।
प्रकुर्वतो विश्वसृजो विधानं
  धिक् धिक् हहा न प्रतिभाति सम्यक् ॥ १८ ॥
इत्येवमेवं परिचिन्तयत्सु
  नृपेषु सा वेत्रवती रमाख्या ।
प्राक् सन्निकर्षम् तुहिनाद्रिभर्त्तुः
  प्रापय्य तां राजसुतामवादीत् ॥ १९ ॥
हिमाद्रिवासी समयं महेन
  निरन्तरं यापयता गणानाम् ।

---

* अनेन नेत्रेण पुरा सुदुश्चरं तपः कृतं, यत् यत्नेन सालकाननोज्ज्वलाम् सालकाननेन शालसमूहेन उज्ज्वलाम्, पक्षे अलकैश्चूर्णकुन्तलैः सह वर्त्तमानं सालकम् तादृशम् आननं मुखं तेन उज्ज्वलाम्, सुजातिकां शोभना जातिः जातिपुष्पं यस्याः पक्षे शोभना विकचा जातिर्जन्म यस्यास्ताम् उद्यानभुवं कुसुमकाननभूमिमिव इमां नृपनन्दिनीम् अवारितम् पश्यति।

नाथो द्विषन्मर्दनतो नृपोऽयं
द्विषन्तपो नाम यथार्थनामा ॥ २० ॥

अस्यौषधिप्रस्थमिति प्रसिद्धं
पुरं द्विषद्भिर्मनसाप्यधृष्यम् ।
विराजते राजसुतेऽनुगङ्गं
सर्व्वाङ्गरम्यं रुचिराधिवासम् ॥ २१ ॥

यत्रौषधिप्रज्वलनप्रणुन्न-
अपातमस्काण्डतया मृगाक्षि ।
कृष्णेपि पक्षे जलदोदयेपि
ज्योत्स्नाभिरामेव विभाति राका * ॥ २२ ॥

नृत्यत्सु यत्राप्सरसां गणेषु
ददत्सु गन्धर्व्वगणेषु तानम् ।
विद्याधरैः सकलितोऽस्वयक्षैः
संगीयतेऽमुष्य यशःप्रबन्धः ॥ २३ ॥

योऽनन्तरत्नप्रभवो हिमाद्रिः
निष्कण्टकं तत्र विभुत्वमस्य ।
स्वयं शची गुम्फति चित्ररत्नैः
हारं मुदेऽमुष्य विनैव सूत्रम् ॥ २४ ॥

विहाय शक्रे किल वैजयन्तं
शरण्यमेनं शरणं प्रपन्ने ।
402

* राका—रात्रि.।

देत्याभियोगात् बहुशो पुलोमो *
सरचितानेन गणाधिपेन ॥ २५ ॥

धात्रा स्वयं कल्पितयज्ञभागः
देवाग्रभूतः प्रथितप्रभावः ।
कुन्दावदातेऽस्य नृपोऽन्वयाये †
दुग्धार्णवेऽभूदिव पारिजातः ॥ २६ ॥

निशम्य भर्त्तुः पितृतोऽवमानं
दाक्षायणी योगविसृष्टदेहा ।
सतो पितृत्वेन गुणैर्वरं यम्
उपागमत् शैलवरं वराङ्गि ‡ ॥ २७ ॥

अनेन चेदिच्छसि गृह्यमाणं
पाणिं वरेण्येन गणाधिपेन ।
गौर्य्या सदा यौनमनन्यकाम्यं
सम्बन्धसम्मानमवाप्स्यसि त्वम् ॥ २८ ॥

पुरं प्रवेक्ष्यस्यमराङ्गनाभिः
गणादिभियाप्यभिनन्द्यमाना ।
रतिः स्वयं ते सुरुचिप्रकृष्टं
पुरा विधत्ते ‡ प्रतिकर्म्म § गात्रे ॥ २८ ॥

स सर्व्वथाश्लाघ्यसमागमोऽपि
न तन्मना बन्धुमती बभूव ।

---

* [illegible] । † [illegible] । ‡ [illegible] ।
§ [illegible] ।

सत्याः पदं चेतसि को निधातुं
विना पतिं प्राक्तनभोश्वरः स्यात् * ॥ १९ ॥

प्राग्ज्योतिषाणां नृपतिं ततोऽसौ
नीत्वा रमा तामवदत् कुमारीम् ।
रूपे यथायं गुणतस्तथैव
पश्यालि ! सर्व्वावयवानवद्यः ॥ २० ॥

लौहित्यया नाम तरङ्गवत्या
प्रजाः पयोभिः परिवर्द्धयन्त्या ।
साचैव संवेष्टितमस्तभोति
प्राग्ज्योतिषं नाम पुरं विशालम् ॥ २१ ॥

तत्रास्ति कश्चित् सुतरुडसेवो
ससम्महासेन इव त्रिनेत्रः ।
आचार्य्यवीर्य्यैः किल चित्रसेनः
सामर्थ्यकृत् यः सुहृदा विपाद्य † ॥ २२ ॥

चित्तेति साध्वी कमलांशभूता
यस्यात्मजा मूर्त्तिमतीव लक्ष्मीः ।

---

* लज्जावशात् पतिं विना च पर्य्यन्तप्रज्ञाया मनसि पदं निधातुं क्षम । मनसाधिप शास्ता प्राक्तनपतिः ।

† त्रिनेत्र इव शिव इव ससम्महासेन सतत् श्रीमान् विद्यमान इति यावत् महासेनः कार्त्तिकेयो यस्य तादृश पक्षे महती सेना यस्य स तादृश इव चित्रसेन सुहृदां [illegible] विपाद्य [illegible] सामर्थ्यकृत् सामर्थ्यं करोति इति (सामर्थ्य+कृ+क्विप्) सामर्थ्यं करोति भावयति इति (सामर्थ्य+कृत्+क्विप्)। यो निषाणो यहिषदैन पर्य्यायो भवितव्यतारोधकं ।

नागास्तथा भोगवतीपयोभिः
तामेत्य सर्व्वे सपयास्त्वभूवुः ॥ ३८ ।

प्रजाधृतोयं विषयाश्च नाना
जनैः समागम्य विलोक्यते सा ।
दृष्टा च तां पापविमुक्तदेहैः
जीवद्विमुक्तैरिव भूयते तैः ॥ ३९ ।

अस्याः प्रभावात् नहि यत्र दैवं
न मानुषं वा व्यसनं कदाचित् ।
नाकालमृत्युश्चरतीतिभीतिः*
नैवा प्रजानां न पराभियोगः ॥ ४० ।

तान् कामरूपान् विषयान् विशालान्
अयं नृप. शास्ति विलोनशत्रून् ।
यथापराधं प्रणयश्च दण्डं
प्रजाः प्रजावत् परियाति सर्व्वाः ॥ ४१ ।

नृपे पुरोवर्त्तिनि शासति क्षिति
न भारतादन्यत दृढशासनं ।
कदापि दुःशासनदर्शनं, गुणे-
ष्वनादरो वान्यनृपात् न कौरवात् †॥ ४२ ।

* ईतिभीति —अतिवृष्ट्यादेर्भयम् ।

† दृढशासन पुरोवर्त्तिनि नृपे क्षितिं शासति सति भारतात् अन्यत्र दृढ शासन दर्शनं न, किन्तु महाभारते एव दुःशासनस्य दुर्योधनानुजस्य दर्शनं नतु दुष्टशासनस्य निन्दितराजशासनस्य दर्शनम् । कौरवात् कुरुवंशात् अर्थात् धृतराष्ट्रात्

प्रजासु या चैव कथा, वदान्यता
प्रदृश्यते सुन्दरि! यस्य जन्तुषु ।
द्विषत्कुलाम्भोजविमर्द्दकारिणो
ऽप्यस्य दानार्द्रकरा गजा अपि * ॥ ४३ ॥

यो नाम गोत्रोद्धरणे प्रवृत्तः †
चकार गोत्रोद्दलनं वराहः ।
स्वगोत्रलक्ष्मोपरिवर्द्धनस्य
कथं स देवोऽस्य दधाति साम्यम् ॥ ४४ ॥

अस्याद्भुतश्रीभव, चेत् महेश्याः
देव्या नु सन्ध्यावलिदर्शनार्थम् ।
सुरासुरान् किन्नरयक्षमर्त्यान्
समागतान् प्रेक्षितुमस्ति कामः ॥ ४५ ॥

अन्यत्र गुणेन समादरोऽपि नासीत् केवल धृतराष्ट्र एव गुणे भीम समादरं [illegible] दर्शितवान् [illegible] प्रजासु च यत् गुणे गुणिना गुणवत्त्वे समादरं करोति इत्यर्थः ।

* हे सुन्दरि! प्रजासु या एव कथा अस्य राज्ञो वदान्यत्वादि दृश्यते, यत् यस्मात् द्विषत्कुलाम्भोजविमर्द्दकारिणो शत्रुकुलकमलोच्छेदपर अस्य राज्ञ गजा अपि करिणोऽपि दानार्द्रकराः दानेन मदस्रावकाले जलसेकेन आर्द्रकरा सिक्तहस्ताः अथ च दानेन मदवारिणा आर्द्रीभूताः इत्यर्थः ।

† गोत्रोद्धरणे गोत्रायाः पृथिव्या उद्धरणे यो वराहः महावराहः गोत्रोद्दलनं गोत्राणां पर्व्वतानाम् उद्दलनम् अथच गोत्रस्य वंशस्य उद्दलनम् उच्छेदं चकार इत्यं विरुद्धव्यापार. स देव. वराह स्वगोत्रलक्ष्मोपरिवर्द्धनस्य केवलं स्ववंशश्रीवृद्धि कारिणः अस्य राज्ञः साम्यं सादृश्यं कथं दधाति धारयति तेन सदृश उपमा नैव भवतीत्यर्थः ।

श्रीवत्सराजाहृतमानसायाः
  सोऽस्या न भूपो रुचये बभूव।
प्रफुल्लचूतावगृहीतचित्ता
  वृक्षान्तरं काङ्क्षति किं नु भृङ्गी ? ॥ ४६ ॥

इङ्गितसंज्ञया बोधितचित्तभावा
  रमावती सा नृपनन्दिनीं ताम्।
प्रापय्य चीनाधिपसन्निधानम्
  अश्रोतुकामामपि संबभाषे ॥ ४७ ॥

अस्त्यत्र चीनाख्यमहाप्रदेशो
  विख्यायमानेन समुन्नतेन।
दोर्वीर्येण कौतूहलवर्द्धनेन
  वृतः समन्तात् वरणेन भद्रे ! ॥ ४८ ॥

विपक्षपक्षैः किल दुष्प्रवेशे
  विचित्रकान्तवसुख्यभूमौ।
एकातपत्रं कुरुते प्रभुत्वम्
  अस्मिन् नृपो मोहति* भिर्ह्नतीयम् ॥ ४९ ॥

समाश्रयोऽयं महसां सुवृत्तः
  कमलकला त्वं ननु पद्मिनी च।
तत् ते नृपस्यास्य च सङ्गमोयम्
  कल्पिष्यतेऽन्योन्यमहोत्सवाय† ॥ ५० ॥

---

* मौइात—जनपदे देशे द्रष्टव्यः।

† यथा पद्मिन्याः कमलिन्याः सूर्यस्य च तथा तेजस्विनः पुरुषस्य चास्य राज्ञः कोमलाङ्ग्याः पद्मायाश्च नायिकायास्ते सङ्गः परस्परानन्दवर्द्धनाय भविष्यतीत्यर्थः।

तुषारपातेन विपद्यमाना
ह्यप्यत्यतोवातपतापतप्ता।
यथानुरक्ता तपने महौजाः
सा पद्मिनो वास! * निदर्शनं हि ॥ ५१॥
अनेन राज्ञा च गृहीतपाणि
श्रीनाशुक तत् परिधेहि नित्यम्।
विलासवस्तुष्वतिरम्यमेक-
मित्यन्वदेशी यदतीव काम्यम् ॥ ५२॥
ओष्ठाधरे नूतनपल्लवाभे
दीर्घे च नीलोत्पलनिन्दिनेत्रे।
तिलप्रसूनप्रतिमे च नासे
विलक्षणेयं नृपभामिनीति ;
प्रतिक्षणं त्वं परिवारवर्गैः
सकौतुकं सस्पृहमीक्ष्यमाणा
इयं सिकानाममदोतटस्थे
हर्म्ये सुरम्ये नय कान्तमालि। ॥ ५३,५४॥
प्रसाधनेऽस्याः खरभार्यया कृते-
ष्वनादृतायाः कथमंशुके धृतिः।
इतीयमुक्तोतमनोगता रमा
नृपान्तरं तामनयत् नृपात्मजाम् ॥ ५५
द्वीप सुमालेति जगत्प्रसिद्धम्
गन्धाष्टकैर्वासितमिद्धगन्धैः।

---

* वासु !—बाले।

रघ्वग्र्यं गोत्रमनन्यकर्म्मा
जिगाय तं गोत्रभिदं सुरेन्द्रम्।
मित्रेय्यमित्रे समदृष्टिरेषः
नूनं विजिग्ये विषमायमोयम्* ॥ ६२।

इत्येवमस्या वचनं वदन्त्या
आचिम्य भद्रा निजगाद नीचैः।
मयि प्रसन्ना सखि। शैलपुत्री
वरो ममेष्टः समुपस्थितोयम् ॥ ६३।

दिक्पालवर्गाः क्षितिपालवर्गाः
सर्व्वेऽनुजानन्तु मयि प्रसन्नाः।
अद्य प्रणोमीष्टवरं महेश्या
स्वप्ने प्रदत्तः स्ववतुष्टया यः ॥ ६४।

इत्युक्तवत्येव विदूरवर्त्ति-
कदम्बमूलाभिमुखं चचाल।
चौवेयमित्याकुलमानसास्तां
उत्तस्थिवांसो ददृशुर्नृपालाः ॥ ६५

सा हर्षवेगात् न शशाक वक्तुं
मनोगतं भावमरालकेशी।

---

सुमित्रस्य सदन्धुनः चपेत युक्त दशरथ सुमन्त्रेव तन्नाम्ना मन्त्रिणा अर्थ राजा उतीमि मन्त्रवाभि ईरिता कर्म्मसु अतिशय साहाय्य चयाशो रविवत् सूर्य्य इव वसूपयोगीर्पितादनन्या चयाशी चयपचे चवचयेव वसुमि किरणे चनेव उपचित वद्धित विजम्भा चन्द्र आप्तवत येन साहाय्य।

* ईश —मित्र मित्रे समम अमित्रे शत्रौ न तथेति विषमाय।

तस्थे परं स्वेदजलार्द्रगात्री
श्रीवत्सराजाय लसन्मुखश्रीः ॥ ६६ ।

रमा समागम्य ततः सुकेशी
जगाद भद्रे ! नहि साम्प्रतं तत् ।
क्षोभस्वपक्षं पितरं विधाय
पार्श्वं प्रयातासि यदेवमालि ! ॥ ६७ ।

स्वयंवराहूतसमस्तभूपा
त्वमासि, नाना विदिशो दिशश्च ।
श्रीवत्सराजे परिहाय सर्वे
समागताः भूपतयस्त्वदर्थम् ॥ ६८ ।

रूपेण जात्या वयसा च तुल्यं
तेषां कथं कामयसे न कश्चित् ।
प्रख्यातवंशादिमकिञ्चनं किं
रूपैकपर्यायमिमं वृणीषे ? ॥ ६९ ।

रूपेण कामं द्युतिकाम एषः
शतक्रतुर्वा यदि कार्तिकेयः ।
किन्त्वेष गूढप्रकृतात्मभाव
स्तस्मादपेक्ष्य कुलं गुरूणाम् ॥ ७० ।

जिज्ञे तु कामं जनको, हसन्तु
भूपाः, विभिन्दन्तु जनाः समस्तात् ।
एवं मदीयः पतिरित्युमा मां
समादिशत्, तत् [illegible] ॥ ७१ ।

"दीर्घायुरथवाल्पायुः सगुणो निर्गुणोऽपि वा।
"सकृद्वृतो मया भर्ता न द्वितीयं वृणोम्यहम्॥" ७२।

तयैवमुक्ते यदु मानिनी सा
रम्भावती नाम जगाद धीरा।
श्रीवत्सराजो जगदेकनाथो
भवत्त्वरस्ते ह्यल्पतायनः सन् ॥ ७३।

इव प्रवृत्तिर्जनतापवादिनी
पदे पदे सञ्चरति प्रसर्पिणी।
पयं सुरूपा नृपलक्षणान्विता
न म सितोगः कथमालि! बुध्यते? ॥ ७४।

तयैवमुक्ते सहसा विदारयन्
नभस्तलं राजगणैरुदीरितः।
विनिर्जिताम्भोधरघोरगर्जितो
ध्वनिः सहासः श्रुतिगोचरोऽभवत् ॥ ७५।

यदि त्वया रे कुलपांसने! वरः
स्वयंवरेऽस्मिन् वरणीय एव चेत्?
विमाननार्थं वद किं तदा नृपैः
समोभिराहूतसमागतैरिह? ॥ ७६।

अमुष्य कौमारहरं समाह्वयन्
अजिघ्रहत् भूपतिरेष वातुकः।
कथं न कन्याम्, कथमीदृशोऽस्य तां
करोति लोकेष्वखिलेषु कीर्त्तिताम् ॥ ७७।

न चेदियं गूढ़निबद्ध भावा
जटाधरेऽस्मिन् कथमन्यथासौ।
दृष्ट्वैव मत्तेव विहाय सर्व्वान्
सम्भावयेत् सम्बरणस्रजेनम् ॥ ७८ ॥

विश्मूलकुण्डे पतिताहुतिर्येत्
प्रवातमुग्रा ज्वलितेऽपि वह्नौ।
तदीयमोघेत नृपात्मजेयं
अग्नाधमेऽस्मिन् सति राजवर्गे ॥ ७९ ॥

तत् लेढु चान्यः परमात्र सेतत्
ग्राम्यो मृगो दूषक एव ताद्यः।
तथा कृतेऽस्माभिरनुष्ठित तत्
कर्म्मातिकर्म्मार भविता नृपालाः ॥ ८० ॥

निगूढ़पापाचरणात् वधार्हः
रूपेण मत्तान्खलधर्म्मवर्म्मा।
द्राक् कन्यकान्तःपुरदूषकोयम्
चानीयतां वध्यभुवं निबध्य ॥ ८१ ॥

इति विसदृशयोगोत्पन्नमासाद्य कोपं
स च नरपतिवर्गयुग्मभेऽग्नः प्रकामम्।
प्रतिदिशमथ सर्व्वैः सैन्यमालोक्य मद्रा-
पतिमतिभरदत्तवीर्यविकम्पं चचाल ॥ ८२ ॥

इति श्रीश्रीवत्सचरिते महाकाव्ये मद्रास्वयंवरो नाम
अष्टादशः सर्गः।

## ऊनविंशः सर्गः ।

अथ कश्चिदुपेत्य पूरुषः
प्रतिभावान् प्रहितो नराधिपैः ।
नृपतिं खलु वक्रसंकथं
प्रियया सार्धमुदाहरत् वचः ॥ १ ।

अपसारितमौर्वका रणे
शरणं यान्ति भयादरातयः ।
यमिहाद्रिपतेः पतिं गणा-
धिपमाकर्णय तस्य शासनम् ॥ २ ।

"त्वयि गूढनिबद्धरागया
नृपपुत्र्या नृपतीन् विहाय नः
त्वमसि प्रतिषिद्धयापि यत्
पतिभावेन वृतः स्वयंवरे ;
न परं खलु तेन नः क्रुधां
त्वमसि, त्वं नच श्लाघ्यतां गतः,
यदियं ननु जानता त्वया
न निषिद्धा कुलटा स्वयंवरात् ॥ ३, ४ ।

अमुना ननु कर्मणा भवान्
महदागः कृतवान् न संशयः ।
सहितो महतां स शाङ्कवो
वहते यत् व्यपयानतं गिरः ॥ ५ ।

वयमप्यतिकष्टमागताः
अमहं तत्तदहो निरर्थकम्।
तदिदं कथमन्यदुष्करं
तव पापं समुपेक्ष्यतेऽञ्जसा ॥ ६।

यदसे विनतं विकर्षके
तव हत्वा व्यपरोप्य मूर्द्धजान्।
करणीयमिदं प्रयाचनं
सहन चेतदहो त्वदागसः" ॥ ७।

स्वयमेतु गणाधिपाश्रितं
ननु यावत् बहुभिः पदातिभिः।
तरसा सुदृढं नियन्त्रितः
सविधे तस्य न नीयते भवान् ॥ ८।

प्रतिनिर्गममार्गमस्तिणो
यदपक्रान्तिनिरोधनाय ते।
ननु जायति तत् पलायनं
नगरात् सौतिपुरात् सुदुष्करम् ॥ ९।

तव मर्त्त्यनिवासिनः सतः
सुरलोकेऽपि सुदुर्लभं वपुः।
रत तस्य कथं क्रियेदृशो
विषमाऽदृष्टचरो जुगुप्सिता ॥ १०।

रुचिरा ननु यत्र चाकृतिः
गुणराशिर्नियमेन तत्र वै।

इति सूक्ष्मपदो चिरन्तनं
  विपरीतं त्वयि दृश्यतेऽधुना ॥ ११ ।

प्रतिनीचकुलात् समुद्भव.
  यत सेवस्यमिदं व्यज्ञीनक्षत् ।
इति चाशुमिति प्रयाधते
  मसृणं कर्दमजातमम्बुजम् ॥ १२ ।

प्रणतानवता महात्मना
  प्रणिपात. प्रशमाय कुप्यताम्* ।
इति विश्वसता त्वया पदं
  स्पृशताश्च क्रियता मम क्षुधाम् ॥ १३ ।

मदलं परिहृदये तथा
  गणनायस्य विलङ्घ्य शासनम् ।
अपराधनमेकमन्नुभिः
  प्रणिमार्ष्टुं सुकरं न तद्द्वयम् †॥ १४ ।

विनतं शिरसि प्रमोदता
  गणभर्त्तुर्नयनाम्बु चार्हजम् ।
ननु तत्र समुन्नतं स्वयात्
  निपतत्येव कृपासिपुञ्जिका ॥ १५ ।

इति गामभिधाय विह्विव
  प्रणिधिं जोपमवस्थित सतो ।

---

* प्रणतान् अवता कुप्यतां महात्मनां प्रणिपात प्रशमाय इति विश्वसता त्वया पदं स्पृशता अस्य गणनायस्य क्षुधा मम क्रियताम् ।

† अपराधद्वयम् ।

रमणेन निवारितापि सा
चलितैकभ्रु, जगाद भामिनी ॥ १६ ॥
प्रतिवाचमयं न दास्यते
अपमानाय गणाधिपाय ते ।
ननु जम्बुक एव जम्बुक-
ध्वनिमाकर्ण्य विरौति, नो हरिः ॥ १७ ॥
प्रतिसर्वमिमं शृणोत्वहं
हतवत्यस्मि वरार्थिनो यदि ।
कथमत्र गणाधिपस्य ते
गुरुरीदृक् वद मत्सरोऽजनि ? ॥ १८ ॥
ज्वलने यदि मन्त्रसत्कृता
पतिता स्यात् विमला घृताहुतिः ।
यतनाय तथाविधस्थले
ननु तस्यात्र वद को ऽसूयति ? ॥ १९ ॥
किमयं नु गणाधिपाय ते
गुरुणा मां प्रतिपादिता तदा ।
हरति स्म धनात् महायनः
मम पत्नी ननु तेन सोऽक्रुधत् ? ॥ २० ॥
कुपितश्च पतिं प्रणामितुं
यदि यत् मोषयते स्वयेच्छया ।
ननु तत्र निदानमन्यथा
मनसो हर्षितरो निरङ्गता ? ॥ २१ ॥ *

* [illegible]

परिणीतवतीं सुकेतुना
  ननु गन्धर्व्वसुतेन सोदराम्।
हृतवान् दनुजाधिपस्य किं
  कृतवान् ग्रासनमेष दुर्मदः ?* ॥ २२ ॥

सति यो निजदूषणेऽक्षमः
  प्रतिकर्त्तुं, परदूषणेऽसति।
प्रतिकारपरः, स कस्य वा
  नहि गच्छत्युपहास्यतां जड़ः ॥ २३ ॥

स हि को मम वल्लभस्य वा
  वद यास्तिप्रतिपादने पटुः।
स च मे न सहोदरः, पिता
  नच तं तत्कारणे न्ययूयुजत् ॥ २४ ॥

न सतो परपूरुषं स्पृशेत्
  इति तस्याङ्ग! भवाय, चान्यथा।
कुलटां वदतोऽस्य सामिदं
  चरणं मूर्द्धनि पातितं भवेत् ॥ २५ ॥

यदि चात्महितं स वाञ्छति
  प्रतियातु स्वगृहाननाहतः।

---

* गणाधिपस्य सोदरा प्राक् सुकेतुना नाम गन्धर्व्वसुतेन परिणीता, तदनन्तरं रणनिर्जिता दनुजाधिपः तां बलात् जहार, एष दुर्मदः तस्य किं शासनं कृतवान्? स्वभागनीचर्मणम् प्रतिकर्त्तुमक्षमस्य परदूषणं प्रतिकर्त्तुकामस्य कथं नाम न लज्जा? कथं वा धीकविकृतजीवितधारणम्?

यदि चैति स कालनोदितो
　वपुरत्येष्यति तत् कबन्धताम् ॥ २६ ।

सुखशायनिका* पुलोमजा
　स्मरभार्य्या रतिरस्य किंकरी ।
इति मां न्यगदत् स्वयंवरे
　सविधे तस्य गतां रमावती ॥ २७ ।

स शचीमथवा स्मरप्रियां
　गणनाथः समुपेत्य पृच्छतु ।
कुलटाहमथान्यथेति सा
　सकलं वेत्ति, निवेदयिष्यति ॥ २८ ।

यमियं नृपनन्दिनी वरं
　वरमाल्येन समर्चयत् स्वयम् ।
स हि कः ? स च कोऽद्युतो, गणा-
　धिपमत्येति गुणैर्नवा स हि ॥ २९ ।

इति सर्व्वमसौ रतेर्मुखात्
　सविशेषं परिभोत्स्यते † भुवन् ।
कुलटां वदतोऽस्य तर्हि मा-
　मनुतापो हृदयं नु तप्स्यति ॥ ३० ।

धनमिष्टतया यदभ्यधात्
　*स हि पापः कुलटेति मां मुधा ।*

---

* या सुखशयनम् पृच्छति। पुलोमजा इन्द्राणी यस्य सुखशायनिका, अस्य परिचारिका इत्यर्थः ।

† परिभोत्स्यते—ग्लास्यति, भुज् + लृट् + कर्म ।

नहि तेन समाश्रयः, कदा
किमु रत्नं वचनात् विनिन्यते ? ॥ ३१ ॥
ननु यत्र कुले हिमालयो
धृतजन्मा कथमोद्‌वयस्ततः ?
अथवा यत एव पङ्कजं
नहि किं शैवल एव तद्भवः ? ॥ ३२ ॥
हिमवान् गिरिरस्य गोत्रभू-
रिति नैवार्हति पूज्यतामयम् ।
किमु शूकरमाघमर्हति
हरिरामोत् ननु कोनक्रः स्वतः ? ॥ ३३ ॥
मयमेव मदीयवल्लभो
गणपं तं न तृणाय मन्यते ।
नहि तद्वचनात् मदायनो
नरसिंहः अविधे गमिष्यति ॥ ३४ ॥
यदि गञ्जिरसो गणाधिपः
किमिति प्राक् समराय मत्पतिम् ।
न समाह्वयते ? तथा कृते
प्रभुभूतं भवितास्य दोर्बलम् ॥ ३५ ॥
यदि चेनमुपेत्य यन्त्रितं
तरसा निगुमयं विचेष्टते,
गतिमाप्स्यति नहि दुर्मदो
ननु पापो वनयोर्दुर्गतः ;

* प्रभ —द्वम.।

नतु पश्यतु योषितां भुजे
बलवीर्यं कियदस्ति दुर्मदः ॥ ४२ ॥

निशमय्य रुषा तयेरिता-
मिति वाचं श्रुतिकर्कशां ततः ।
प्रतिघेन* वचोहरो† भृशं
विचकम्पे चकमे च भाषितुम् ॥ ४३ ॥

नृपतिः स्फुरितोत्तराधरं
पुनरेना खलु वक्तुमुद्यतम् ।
प्रतिषिध्य वचोहरं वचः
प्रशमान्वितमित्यमब्रवीत् ॥ ४४ ॥

अयि ! किं कलहेन वाग्मयैः
उभयोस्तैः प्रतिवादिवादिनोः ।
परमेव विरोधिनो ज्वरः
परकर्षो जनितज्वरः परम् ॥ ४५ ॥

तदतः परमेव भाषणात्
विरतिस्ते मतिमत् ! शुभप्रदा ।
विनिहत्य वटेशपार्थिवं
नहि भद्रापतिरागमिष्यति ॥ ४६ ॥

ननु तादृगदभ्रमुत्कटं
न हताशा चमूरीहते स्वयम् ।
यदपक्रमणं हतात् बलात्
प्रकृतिः सा हि जनस्य तादृशः ॥ ४७ ॥

* प्रतिघः—क्रोधः । † वचोहरः—दूतः ।

इति मद्वचनात् प्रकोपितः
स दिधीर्षुस्तरसा यथा च माम् ।
प्रहिणोति न किंकरान् तथा
कुरु यत्नात् ननु भद्र ! सर्व्वथा ॥ ४८ ।

चतुरङ्गबलान्वितो नृपः
मम मार्त्यै समुपैतु वा स्वयम् ।
अथवा समराय वोरवत्
स हि मामाह्वयतां रणाङ्गने ॥ ४९ ।

प्रथमं यदवोचत प्रिया
तदहं ते स्मरणार्थमभ्यधाम् ।
दृढ़ताप्रतिपादनाय मे
दयितोक्तेर्वचन निबोध तत् ॥ ५० ।

इति स प्रणिधिर्नृपोक्तिभिः
शमदक्षाभिरपि प्रचुक्षुभे ।
समिधा हि घृताक्तयानलः
प्रशमं नैति परं विवर्द्धते ॥ ५१ ।

इति तं जनमत् मनोऽवदत्
ध्रुवमेतेन विमोहितोऽसि यत् ।
अदृढाभिनिविष्टमानसो
ननु तेनैवमसि त्वमोदृशः ॥ ५२ ।

प्रतिकूलविधिर्हिताथिने
प्रियमित्राय जनो नु कुप्यति ।

श्रुतिरन्ध्रगतं पयो यथा
हितमुद्वेजयते वचश्च तम् ॥ ५३ ।

मलिनात्मक एव कज्जलं *
कुरुते कार्य्यमतोवगर्हितम्
घन आहृतमित्यमप्छलो
मलिनात्मा न किं निदर्शनम् ?

रविणायमहो चिरैस्तलात्
रसमाकृष्य करैर्विनिर्म्मितः
गगनाग्र्यसमुन्नतं पदम्
ननु नीतश्च घनो जड़ात्मकः ॥ ५४, ५५ ।

लभतेऽवसरं यदा रदो
दशति प्राक् रसनां तदा भृशम्
रसना तु रदस्य यातनां
यतते वारयितुं प्रतिक्षणम् ;

उपकारपरः परस्य यः
कुरुते स क्षतमात्मनः सदा,
अपकारमहो परैः कृतं
न कदाप्यपरत्यसौ क्षतो ॥ ५६, ५७ । युग्मकम् ।

अयमुपविष्टो महीरुहो
न शमस्थाल दर्शं नु मा स्पृश ।
उपदेशमिम दयापराः
प्रददत्यम्बुजनाय माधवः ॥ ५८ ।

---

* कज्जल—कालिमा।

तदधीनमथो विवेकिनाम्
उपदेशश्रवणं यथामति ।
अवहेलनमस्य वा, तथा
प्रतिबुध्यस्व विबोधितो मया ॥ ५९ ॥

इति गणपतिदूतः चौथिनाथं प्रबोध्य
द्रुतपदमगमत् स्वस्वामिनः पादमूलम् ।
इयमिति गणनाथं भावयन् धीरचित्तः
स खलु कुसुमलावी-गेहमागात् सकान्तः* ॥ ६० ॥

इति श्रीश्रीमतत्पचरिते महाकाव्ये भद्रागणदूतसंवादो
नाम ऊनविंशः सर्गः ।

---

* सकान्त,—भद्रया सहित, ।

# विंशतितमः सर्गः ।

आश्वास्यमानां परिचारिकाभी
राज्ञीं सुताशोकविषण्णचित्ताम् ।
रहा निषण्णां समुपेत्य राजा
स बाहुको वाक्यमिदं बभाषे ॥ १ ।

अलं विषादेन, विमुञ्च भूमिं,
मोदस्व जामातृजयेन देवि !
वत्सोऽसहायो नृपचक्रमाजौ
खड्गद्वितीयो निखिलं विजिग्ये ॥ २ ।

विपक्षपक्षाः प्रबला निकामं
भुजैकपक्षो दुहितुः पतिस्तत् ।
अनिष्टमाशङ्क्य शमं विधित्सुः
गतो रणक्षेत्रमहं सवर्ग्यः ॥ ३ ।

नदत्सु तूर्येषु निषेधवाक्यं
न कस्य यातं श्रुतिमार्गमुच्चैः ।
तिरोदधत्यक्षिपथं प्रगाढे
रजोन्धकारे न च कोपि दृष्टः ॥ ४

चणं विदूरे विकलेन्द्रियः सन्
कर्त्तव्यमूढः स्थितवान् सशङ्कः ।
स सैन्यघोषः सहसा प्रशाम
द्राक् नीरजा भूरुधिरप्रवाहैः ॥ ५ ।

न धर्म्ममेतत् प्रधनं यदेकं
योधा असंख्या अभियुञ्जते द्राक्,
ब्रुवाण इत्थेवमपि प्रयुक्त-
कण्ठ तदा दुष्टजने समन्तात् ;
प्रणोदिता वीरवर ! * त्वयैव
भूपा अमी चात्तमपास्य धर्म्मम्,
आक्रान्तवन्तो युगपत् प्रहृत्या
मां वप्रपाशाः† समरेऽसहायम् ॥१७, १८ ।

कण्ठे मदीये वरमाल्यदाने
सति तया, त्वं करतालमुच्चैः ।
दत्त्वा विमूढ ! व्यहसीः प्रकामं
वदन् मुहुस्तां कुलटेति साध्वीम् ॥ १९ ।

इयं क्षितिर्यत् नरशोणितेन
संप्लाविता दुष्ट ! विदूषिता च ।
मूलं तु तथापरहृद्विहिष्टो
महीयसी मत्सरिता तवैव ॥ २० ।

नृपात्मजा सा कुलटा मृगाक्षी
प्रभुर्भवद्बन्धनमोचनाय ।
तत् तत्समीपं भवतैवमेवं-
दर्पेण गन्तव्यमलं रुदित्वा ॥ २१ ।

---

* शौण्डीर्य्यं वचनमेतत्, रे कापुरुष इत्यर्थः ।

† वप्रपाशा—कुत्सिताः नृपाः. ( कुत्सार्थे पाशः ) ।

स्कन्देऽप्यसम्भाव्यमिदञ्च* रामे†
न सम्भवत्येव मुनौ कथञ्चित् ॥ ११ ॥

प्राद्रुद्रवत् चीनपतिर्भयेन
विमुक्तशस्त्रो हतसर्व्वसैन्यः ।
मृतोऽथवा प्रच्छतवान् न जाने
स कामरूपाधिपतिः ससर्व्वः ॥ १२ ॥

खड्गप्रहारेण विलूनगात्रो
व्यपेतमौलिः प्रणिपत्य वत्सम् ।
क्षतस्खलद्रक्तवपुः सुमाचा-
पतिर्ययाचे गमनं स्वदेशे ॥ १३ ॥

प्राग्ज्योतिषाणामधिपस्य शुचं
शिरस्यजिघ्रत् प्रणतं जटाख्यम् ।
ततः समुत्थाप्य विचुम्बितास्यं
गाढं समालिङ्गितवान् सहर्षः ॥ १४ ॥

द्विषन्तपं नाम गणाधिनाथं
मौर्व्व्या दृढं यन्त्रितहस्तपादम् ।
प्रसादयन्तं खलु मोचनाय
सहासमेवं निजगाद वत्सः ॥ १५ ॥

किं शासनं ते भवितानुरूपं
स्वयं विचार्य्याशु निरूपय त्वम् ।
मां कर्त्तुमिच्छा ननु विप्रवक्त्रम्‡
शतत्यानया ते भवति स्म मूढ ! ॥ १६ ॥

---

* स्कन्दे—कार्त्तिकेये । † रामे—परशुरामे । ‡ विप्रवक्त्रम्—ब्राह्मणमुखम् ।

न धर्मरमेतत् प्रधनं यदेकं
योधा असंख्या अभियुञ्जते द्राक्,
ब्रुवाण इत्येवमपि प्रमुक्त-
कण्ठे तदा दुष्टजने समन्तात्;
प्रणोदिता वीरवर ! * त्वयैव
भूपा अमी चात्तमपास्य धर्मम्,
आक्रान्तवन्तो युगपत् प्रहृत्या
मां चक्षपाशाः† समरेऽसहायम् ॥१७, १८।

कण्ठे मदीये वरमाल्यदाने
कृते तया, त्वं करतालसुखैः।
दत्त्वा विमूढ ! व्यहसीः प्रकामं
वदन् मुहुस्तां कुलटेति साध्वीम् ॥ १९।

इयं क्षितिर्येन नरशोणितेन
संप्लाविता दुष्ट ! विदूषिता च।
मूलं नु तत्रापरहृद्विदृष्टी
महीयसी मत्सरिता तवैव ॥ २०।

नृपात्मजा सा कुलटा मृगाक्षी
प्रभुर्भवद्बन्धनमोचनाय।
तत् तत्प्रमोषे भवतैवमेवं--
दर्पेण गन्तव्यमलं कदित्वा ॥ २१।

---

* वीरवर्य वचनमेतत्, ऐ वायुदय स्पर्शः।

† चक्षपाशाः—कृपणिकाः, यथाः ( कृष्णाक्षी पाश )।

सा राजबाला परिमूढचित्तं
  विबोधयिष्यत्यपयातदुःखा ।
कस्याङ्कलक्ष्मीरभवत् नताङ्गी
  कथं परिज्ञानमिति स्फुटं त्वाम्* ॥ २२ ॥
इत्येवमुक्तः स† च कातराक्षं
  मामैक्षत द्राक् परिवर्त्य वक्त्रम् ।
उन्नीतभावोऽहमनेन तस्य
  वत्साम्बिकं सत्वरमभ्यगच्छम् ॥ २३ ॥
अवोचमेनं गणपो विमुच्यतां
  विमाननामीदृशमेष‡ नार्हति ।
क्षमा हि धर्मो विनतेऽहिते तु यत्
  तदेव वीरत्वविशेषबोधकम् ॥ २४ ॥
मयैवमुक्तो वचसः सदुत्तरं
  प्रदाय वत्सः क्रियया झटित्यसौ ।
प्रणम्य मां भावविहीनमम्बुधिम्
  ययौ समुद्दिश्य मृगेन्द्रविक्रमः ॥ २५
प्राग्ज्योतिषाणामधिपस्य पुत्र-
  स्तत्संश्रया तं द्रुतमन्वगच्छत् ।
गणाधिपेनाहमपूर्णकामः
  [illegible]र्निहतः ॥ २६ ॥

---

* सा कस्य कण्ठे वरमाल्यं दत्तवती, यस्य कण्ठे वरमाल्यं दत्तवती तस्य स्वरूपं कथं सा ज्ञातवती, तत् सर्वं सा त्वां स्फुट बोधयिष्यति ।

† सः—गणपः ।  ‡ ईदृशम्—ईदृशीम् ।

निशम्य भर्त्तुर्वचनं सहर्षा
राज्ञी नियम्य श्लथकेशजालम् ।
बद्धोपचाराञ्जलिमश्रुदिग्धा
इत्थं प्रियास्ये क्षिपती बभाषे ॥ २७ ।

वत्सो न ते यत् श्वशुरार्हपूजां
चक्रे, न तत्रास्य मदो निदानम् ।
तवैव तस्मिन्नवधीरणं तत्
तटस्थमेनं कृतवत् निबोध ॥ २८ ।

यन्मे त्वया मत्सविधे यदुक्त-
मद्यैव विश्वस्य भवान् न तस्य ।
तत्त्वावधानं कृतवान् सरोषः
तेनायमेवं कलुषान्तरात्मा ॥ २९ ।

समानिता* बन्धुजनस्य नाथ !
विक्षुब्धचित्तं कुरुते हि बन्धुम् ।
सपर्य्यया तत् परिपूज्य वत्सं
प्रवेशयाद्यैव गृहं दुहित्रा ॥ ३० ।

श्रीवत्सराजः शनिपीड़नेन
भार्य्यासमेतो मुनिवेशधारी
वने वने पर्य्यटतीति वार्त्ता
रसामुखात् श्वश्रुवयोः† श्रुता मे ;

* समानम् इत्येकमसमानितार्थ ।
† श्वश्रुवौ—श्वशुरौ, श्रु+कृ, स्त्रीत्वात् ईष् ।

मुमूर्च्छ, मूर्च्छापगमे च रम्भा
तामित्यमाश्वासयदेत्य बालाम्,
अलं विषादेन, न शैलपुत्र्या
वचोऽन्यथा स्यात्, भव सुचि ! धीरा ॥२१,२२॥

कश्चित् मदीये सदने महात्मा
विचित्रभस्मिच्छलतापसः सन् ।
समेत्य वासं कुरुते कियन्ति
दिनानि वत्से ! सुनिगूढवासम् ॥ २३ ।

तस्मिन् समयं नृपचक्रवर्त्ति-
चिह्नं स्फुटं रूपमलौकिकञ्च ।
निगूहते यद्यपि चात्मरूपम्
तथाप्यसौ स क्षितिपो न शङ्का* ॥ २४ ।

श्रीवत्सराजे किल बद्धभावा
तस्य ह्यनुद्वेगकथां निशम्य
भद्रा हताशा मरणोद्यताभूत्
इत्येवमाकर्ण्य स† शङ्कमानः ;
सा प्रेषयामास भवत्सकाशं
त्वामेवमाह स्म च सम्भ्रमेण,
अविप्लुताद्ये वचनं नु देव्याः
कर्त्तुं न युक्ता समयेऽवतीर्णः ;
अद्यापि द्राक् गिरिजाप्रसादात्
त्वां पूर्णकामां हि पुरा विधत्ते,

---

* [illegible]   † [illegible]

तच्चिन्तयालं नृपपुत्रि ! धैर्यम्
आधेहि, धीरा गमयस्व कालम् ॥ ३५-३७ ।

इत्येवमाकर्ण्य मुनेर्निदेशं
रम्भामुखात् सा स्थिरतामगच्छत् ।
सोवेव यत् सा सहसा कदम्ब-
मूलं गता तत्र निदानमेतत् ॥ ३८ ।

भृङ्गीस्वरूपं प्रतिपद्य गौरी
कदम्बमूले तव पुत्रि ! भर्त्ता ।
अमुं वृणोष्वेति जुगुञ्ज कर्णे
श्रुत्वैव बाला नृपतीनद्वाक्षीत् ॥ ३९ ।

निषिध्यमानाप्यनिरुद्धवेगा
नदीव निम्नाभिमुखी वहन्ती ।
चचार त छद्ममुनिं पतित्वे
नृपाश्च सार्द्धं जहसुः समस्ताः ॥ ४० ।

पित्रा न दत्तेति सुता मदीया
मत्तोऽस्पृशन् धर्म्मपरायणोऽयम् ।
एतानि दिनानि तया सहोग्रम्
"अध्यास्तनीव व्रतमासिधारम्" ॥ ४१ ।

न नन्दने नापि कुबेरकानने
प्रजायतेऽन्या विपदस्त्रिरुत्कटा ।
इति स्थिरात्मा तनयागतां स्वयं
सहोऽस्ति जामातरमानय द्रुतम् ॥ ४२ ।

सद्भर्तृसङ्गमुदितामभिनन्द्यकार्य्यां
वत्सां प्रियेण सहितां भवनं नयामि ।
इत्थं नृपः प्रियतमां परिसान्त्वयंस्तां
निर्य्याय वासभवनात् सद आससाद ॥ ४३ ।

इति श्रीश्रीवत्सचरिते महाकाव्ये वाडुकातत्पत्नी-
संवादो नाम विंशः सर्गः ।

सद्भर्तृसङ्गमुदितामभिनन्द्यकार्ष्यां
वत्सां प्रियेण सहितां भवनं नयामि ।
इत्थं नृपः प्रियतमां परिसान्त्वयंस्तां
निर्याय वासभवनात् सद आससाद ॥ ४३ ॥

इति श्रीश्रीवत्सचरिते महाकाव्ये वाहुकतत्पत्नी-
संवादो नाम विंशः सर्गः ।

आश्चर्यमेतदरिवंशदवानलस्य
   राज्ञोऽस्य कश्चिदपरत्र रणाद्धि काले।
एतावता न समयेन यदुग्रधारं
   तं चन्द्रहासमवलोकयति स्म लोकः॥ ११॥

तत् कामरूपविषयाधिपतिः सुमाया-
   नायस्य भाषितमथो अनुमोदते स्म।
यद्येष राजकमले न स सैंहिकेयः*
   किं चित्रसेनतनयं स तदाभ्यनन्दत्?॥ १२॥

या चित्रसेनतनया जगति प्रसिद्धा
   चित्रेति तामहितघस्मर एव राजा।
जग्राह धर्मपरत्वाय कलत्रभावे
   सश्यालकं तदयमद्य निनाय वासम्॥ १३॥

आकर्ण्य तत् स्तुतियुतं वचनं स राज्ञः
   प्रोवाच फुल्लवदनो गलदश्रुबिन्दुः।
दिष्ट्या प्रियद्रुमतया मदकार्ययोगः
   प्रासस्तदा रुचिकरो यदभूत्तयोऽस्य॥ १४॥

धन्यासि राज्ञि! तव गर्भसुधाम्बुधौ यत्
   ईदृक् प्रियप्रकृतिका कमलाऽजनिष्ट।
या निर्जरेषु निखिलेष्वपि सत्सु वामा
   दुर्वीक्ष्यरूपमपि विष्णुमवाप कान्तम्॥ १५॥

---

* [illegible]

खड्गोऽपि तस्य ननु नन्दक एव नान्यो
यस्मिन् विशुद्धमुकुरप्रतिमेऽप्रमेये ।
संक्रान्तबिम्बमवलोक्य रिपुः स्वदेहं
द्राक् शिक्षते रणपराङ्मुखतोपदेशम् ॥ ६ ।

आकर्ण्य वाक्यमिति तस्य हसन् समाना-
नाथोऽवदत् नरपतिं विनयावनम्रः ।
मानो विजेतरि समर्थयतेऽरिपक्षे
दैवानुकूल्यमपवारयितुं स्वदोषम्* ॥ ७ ।

तेन द्विपन्तप इति प्रलपन् स्वदोषं
निह्नोतुमिच्छति न तत् नृप ! रोचते मे ।
जामातरं तव समर्थयते मनो मे
श्रीवत्सराजमतिसर्व्वबलं वरेण्यम् ॥ ८ ।

तस्याद्य शौरिपरिपीड़नपीड़ितस्य
कान्तानुगस्य मुनिवेशतिरोहितस्य ।
कान्तारमावसत एव गताः कियन्तः
संवत्सरा नरपतेरतिदुर्गतस्य ॥ ९ ।

तस्येदृशो नृपवरस्य हरिप्रदत्तः
खड्गोऽस्ति, यत्र करसङ्कलितेऽरिपक्षाः ।
भग्नोद्यमाः करतलस्खलदायुधाः द्राक्
दूरं प्रयान्ति समरात् भयविह्वलाङ्गाः ॥ १० ।

---

* अत्र देवबलेन यशो, यस्य पुरतः के वयम् इत्येवं समर्थनं विना मानिनः पराजयाभाषणम् अवमाननम् न भावयन्ति सोढुम् इत्यत आशयः. तस्मिन् खड्गमेव हरेरानुकूल्यं समर्थयते ।

भद्रं त्वया कृतमभूत् तनये! सु भद्रे!
    *आबोधजन्म नियतास्खलितोपचारा।
आराधनं सुकठिनं हरवल्लभायाः
    यत् त्वं शिरीषमृदुलापि चकर्थ तादृक्॥ १६।
एतादृशेन तपसा च विना कथञ्चित्
    तादृक् पति र्न सुलभस्तव तत् विनागः†।
यत् ते विमाननमकार्यमबोधपूर्व्वं
    तत् पुत्रि! तातकृतमित्यद एव मृष्यम्॥ १७।
पूर्णं मनोरथमिमं सचिवाः! नृपेन्द्राः!
    किं नाभिनन्दितुमहो त्वरते जनोऽयम्‡।
आगच्छताशु मिलिताः परिलभयेम
    त तत्समा वयममुं प्रतिपत्तिमद्य ¶॥ १८।
इत्येवमश्रुकलुषेक्षणयुग्मयुक्त-
    वत्येव राजनि सभास्थसमस्तलोकः।
राज्ञो वचोऽनुमुमुदे च नभःप्रमाथी
    घोरश्च कर्णविवरं गत आर्त्तनादः॥ १९।
कस्यार्त्तनाद इति तन्निनदानुसारि
    नेत्रं प्रसार्य्य च विलोकयितुं प्रवृत्तः।
साश्चर्य्यमैक्षत सदस्यगणः कमेकम्
    आकृष्यमाणमपरैः पुरुषै र्निबध्य॥ २०।

---

* अत्र दूराह्वाने न सन्धिः। † आगः अपराधः, विनापराधम्।
‡ अयं जनः —सचिवो जनः अहमित्यर्थः।
¶ तमत्र श्रीवत्सं तत्समाः श्रीवत्सानुरूपां प्रतिपत्तिं गौरवं सम्भाषणमाप्याम आशु आगच्छत यूयम्।

स्वर्णेष्टकाभिरमलद्युतिभिर्विचित्र-
निर्म्माणसौष्ठवमनोहरदर्शनाभिः
पूर्णे च किङ्करजनैः परिवाह्यमाने
पार्श्वे पुरः चितितले निहिते प्रशस्ते ;
प्राग्ज्योतिषेश्वरसुतेन च दर्शिताख्या
भास्वानिवाक्षयपुरःसरतामुपेतः ।
काषायवस्त्रयुगलं स मुनिर्वसानो
द्राक् सभ्यचञ्चलदृशां विषयोबभूव ॥ २१,२२ ।

तं वीक्ष्य सम्मुखगतं स हि सार्थवाहो
राजन्ननेन मुषितोस्मि नराधमेन ।
विद्वानमुं कपटतापसवेशगूढ़ं
दण्डं करोतु ननु शासकमस्य देवः ॥ २३ ।

इत्थं प्रकुर्व्वति च तत्र नृपाभियोगं
श्रीवत्सभूपतिरनाकुलचित्तवृत्तिः ।
सम्बोधयन् नृपवरं परिदर्शनार्थं
प्रत्यर्थिवत् विनयनम्रगिरा समोचत् ॥ २४ ।

धर्म्मावतार ! ननु देव कृपानिधान !
मापीयमम्बुधिजले सहसा चिपन् माम् ।
स्वर्णेष्टकाः प्रलपुषितस्तया मदीयाः
स्वस्वामितामगमयत् प्रतिभुक्तगहः ॥ २५ ।

मत्कान्तयास्य तरणी पदपङ्कजेन
स्पृष्टा गतिं द्रुततरामगमत् नितरा ।

गच्छेत् कदाचिदियमोदृशमध्यवस्थाम्
इत्येव तामगणयत् परिचारिकासु ॥ २६ ।

आकर्ण्य तत् वचनमस्य मुनेः स साधुः
कृत्वाट्टहासमवदत् शृणु देव सर्व्वम् ।
श्रीवत्सराजवनिता हरमोहिनीव
दत्तात्मजा वसति मे नृप ! पोतमध्ये ॥ २७ ।

सा पूज्यते प्रतिदिनं परया च भक्त्या
देवीव देव ! जननीव मया यथावत् ।
श्रीरत्नदृष्टिरपरा परिचारिकासु
सा गण्यते ननु मयेति मुधा प्रलापः ॥ २८ ।

स्वर्णेष्टका मम बलात् परिलुण्ठतो द्राक्
श्रीवत्सराजदयितामभिलप्यतश्च ।
अद्यापि किं वपुरिदं न कबन्धभावं
प्राप्नोति दुष्टचरितस्य नृपाद्भयात्मा ॥ २९ ।

यद्यस्य सा युवतिरत्नमयं तदास्याः
कीदृक् स्वरूपमनुवर्ण्य वदत्वनार्य्यः ।
इत्येवमस्य वचनं निशमय्य साधु
साधूक्तमाकलय तापस ! तत्स्वरूपम् ॥ ३० ।

वाक्यं समीरितमिदं गणपेन तेन
प्रत्यर्थितामुपगतोऽपि निशम्य राजा ।
किञ्चित् तदुत्तरमयं न ददौ, निकामं
पक्षं विवर्त्त्य परिभूत इवावतस्थे ॥ ३१ ।

भूयोऽनुयुक्त इभवैरिपराक्रमोऽसौ
गर्व्वोद्धतं वचनमाददं इत्यभीकः।
कस्त्वं किमर्थमनुयोगपरोऽसि भद्र!
न त्वं विचारकरणेऽधिकृतो नृपेण? ॥ ३२ ।

हेतुं निजानुमितिदार्ढ्यसमर्थकं * तत्
योऽस्ति तापसवचोऽस्तभयं निशम्य।
हृष्टोऽन्वयुङ्क्त नृपतिः स्वयमेव तं तत्-
कान्तास्वरूपमनुवर्णयितुं यथावत् ॥ ३३ ।

वर्षीयसी वलिमुखाभमुखी † विशीर्णा
या खिलिनी वलिमती सितकेशजाला।
छलेन तीव्रविषयोव भुजङ्गयी या
संदधिता विधितशुष्यशरीरयष्टिः;
दुर्गन्धदूषिततनुः पतिपादपद्मं
ध्यायन्त्यनारतमपास्तक्षयात्सुधा च।
पोतैकदेशमधितिष्ठति यात्र साधोः
सैषा मम प्रियतमा नृप! चित्तशङ्गे ॥३४,३५।

इत्युक्तवत्यखिल एव मुनौ सदस्याः
साट्टं जहास नृपतिं वणिजश्च हित्वा।
एकस्य ‡ वक्त्रनलिनं स्फुटतामगच्छत्
अन्यस्य नैगमपतेर्मलिनं बभूव ॥ ३६ ।

---

* अयं न तापसः, किन्तु स श्रीदत्त एव छद्मना। अनुमिते, इदन्तासम्पादक हेतुं 'योऽस्ति' एतन्मीति तत् तापसवचः निशम्य साधुकः हृष्टो बभूव, यदि माहात्म्यप्रमुखात् ईदृशं वचः निःसरति।

† वानरमुखी।

‡ एकस्य—साधुजनस्य।

उन्मत्तवत् प्रलपितं यदि तापसोऽसौ
चक्रे, तथापि वणिजोऽस्य विपक्षभावः ।
सन्दिग्धबुद्धिमकरोत् ननु मामितीत्थं
तस्मिन् विचिन्तयति सर्व्वसदस्यवर्गे ;
पत्न्याः स्वरूपमभिधेहि यथायथं द्राक्
किं तात ! विप्रलभसे श्वशुरं त्वमेवम्
साध्वी नृपे वदति चैवमपास्तधैर्य्यं
श्रीवत्सराज इति वाचमुवाच तथ्याम् ॥ ३७,३८ ।

प्रत्यक्षतां गतवती च यथोक्तरूपा
सा ते विकल्पमचिरात् निरसिष्यति श्वाम् ।
निर्णीयतां प्रथममस्य दुरात्मनो वा
स्वर्णेष्टका मम हि या परिहृत्य देव ! ॥ ३९ ।

स्वर्णेष्टका दधति किं जठरे विचित्रं
पापो ब्रवीतु, परिभिद्य ततः समस्तम् ।
लोकं प्रदर्शयतु तत्, तत एव सर्व्वाः
स्तेनात्, यातु सदनं, नृप ! मां प्रशाधि ॥ ४० ।

एवञ्च तापसवचांस्यभिनन्द्य सर्व्वैः
द्राक् मोदितः स च वणिक् वचनं प्रपेदे ।
प्राग् भेदनात् कथमहं गदितुं क्षमः स्यां
पूर्व्वं भिनद्मि तत एव विनिश्चय वच्मि ॥ ४१ ।

सार्द्धं हसत्यखिल एव सदस्यवर्गे
क्रुद्धे च वादन्नयतो मुनिरावभाषे ।

बाढं, पुरा भवतु भेदनमेव, पश्चात्
साधुर्विशिष्य वदतां वर एष वक्तु ॥ ४२ ।
राजाज्ञया प्रववृते स वणिक् कृतास्त्रो
भेत्तुं, सहस्रमपि तस्य परखपालाम् ।
कृत्वापधारमभवत् तदपीष्टकानाम्
एकापि न प्रकृतिचिह्नविशेषिताऽऽसीत् ॥ ४३ ।
तस्मिन् नृपे, "तव मुने ! किमिहास्ति तत्त्व-
निर्णायकं वद परिस्फुटमेव मानम्*" ।
उक्तेति तद्वदनसङ्कुचि स्थितेऽसौ
राजानं† विहस्य वचनं निजगाद नम्रः ॥ ४४ ।
प्रत्येकमेव कलधौतमयेष्टकानां
चिह्नेति वर्णयुगलेन विचित्रकुक्षि ।
पश्यन्तु देव ! सकला नु सदस्यलोकाः
विच्छिद्य बन्धनमहं परिदर्शयामि ॥ ४५ ।
सञ्जातकौतुकरसे परिदर्शनाय
तस्मिन् सदस्यनिवहे सहसोत्थितेऽसौ ।
एकैकशश्छलमुनिः परिभिद्य सर्वाः
स्वर्णेष्टकाः सपदि संशयमानुनोद‡ ॥ ४६ ।
तस्मिन् ह्रिया नतमुखे भयविह्वले द्राक्
राजाज्ञया वणिजि यन्त्रितपाणिपादे ।
प्रादुर्भवन् बहुतिथः परिचारकास्तां
श्रीमन्नृपराजवर्जितां द्रुतमानिनीषुः ॥ ४७ ।

* मानम्—प्रमाणम् । † राजा—श्रीनृप. । ‡ आनुनोद—चिच्छेद ।

प्राग्ज्योतिषेश्वरसुतापहृता जवेन
पश्चात् बलैरनुसृता धृतभासुरास्त्रैः ।
*आलोकिता जनगणैश्चकितेक्षणैः सा
चिन्तानमत् समुपसृत्य यथोक्तरूपा ॥ ४८ ।

"चिन्ते ! स्वरूपमवलम्ब्य सदस्यवर्ग-
सन्देहमात्मविषयं नु निराकुरुष्व" ।
आज्ञापितेति रमणेन पतिव्रता सा
दध्यौ रविं मुदितनेत्रयुगोपविष्टा ॥ ४९ ।

उत्पत्य खं मिथुनमाशु भुजङ्गयोस्तत्
ज्योतिर्मयं वपुरधत्त सुदुर्निरीक्ष्यम् ।
चिन्ता च ता विकृतभोगवतां विहाय
नैसर्गिकं प्रकृतिसुन्दरमाप देहम् ॥ ५० ।

काषायवस्त्रपरिवीततनुः परीता
प्रत्यग्रपल्लवचयैरतुलैः समन्तात् ।
सञ्चारिणी प्रसृतसौरभमुग्धभृङ्गा
वल्लीव वल्लभमसौ प्रणनाम चिन्ता ॥ ५१ ।

चिन्ता विलोक्य वणिजं तदवस्थमश्रु-
पूरार्द्रगण्डयुगलं नृपतिं व्यगादीत् ।
बद्धः किमेष वणिजां पतिरप्यदोष-
स्तूर्णं विमुक्तपरिबन्धन एष कार्यः ॥ ५२ ।

व्यामुग्धबुद्धिविभवः शनिनैष साधुः
नालं बभूव धनलोलुपतां निरोद्धुम् ।

संहृष्टात्मा स्पृशति गगनं तूर्य्यनादे पुरोग-
  श्चिन्ताभद्रानुसृतसरणिं* वेशयामास गेहम् ॥ ५८ ।

हृतमेहि कृतार्थय नेत्रयुगम्
  पुरवासिनितम्बवतीनिवह !
अपतोर्णमहो रमया च गिरा
  ननु पश्य हरिं हर चक्षुरघम् ॥ ५९ ।

इति वन्दिसुतात् प्रतिबोधमिताः
  स्वगृहकार्य्यमपास्य पदैस्त्वरितैः ।
अवलोकयितुं वरमीयुरयो
  प्रतिराजपथं ललना विवशाः ॥ ६० ।

धिक् धिक् मूढ़े ! त्वरितगमने ! पालयस्वापत्नीनं †
  क्रन्दन्तं स्वं तनयमबलं, संस्रष्टापोऽभरोयम् ।
उन्मत्ते ! त्वं निपतसि मुहुर्यासि धीरं, मदान्धे !
  स्त्रोतात् भ्रष्टं न मिपसि‡ यावं कर्णपूरं महार्घम्॥ ६१।
चोवे ! लोकैर्गलितवसना लोक्यसे हस्यसे, तत्
  कश्चित् कालं विरम गमनात् प्राहताङ्गो भवाग्र ।
रागाक्रष्टे ! तरलहृदये ! मत्पुरिस्त्रैकला त्वं
  सन्दर्शार्थं किमिति कथयाकृष्यातायनासि ? ६२ ।
सान्द्रानन्दे ! कियदतिस्पृहा पश्यसि त्वं ? तदाशु
  श्रोम्भुक्ताष्वा भव, भवतु मे दर्शनाशा कृतार्था ।

---

* चिन्ताभद्रानुसृतसरणिं—चिन्ताभद्राभ्याम् अनुसृतपथम् ।

† अपत्नीनम्—त्वां गुप्यदैयमदुरर्तुमदमम् ।

‡ मिपसि—पश्यसि ।

दीर्घे नेत्रे वहसि न पुनर्वीक्षसे मां, पतन्ती
यस्मामेवं गुरुभरतनूभारखिन्नां करोषि ॥ ६३ ।
धन्या भद्रा निखिलनृपतीन् मन्यमाना तृणाय
प्रोन्मत्तेवाप्रतिहतगतिर्या तदा धिक्कृतापि ।
हीनावस्थं छलमुनिममुं मालया सन्तुभावे
वव्रे लक्ष्मीरिव मधुरिपुं छद्मवेशेन गूढम् । ६४ ।
नारीजनैः पुरभवैः कथयद्भिरेवम्
आयोध्यमान इव नेत्रपुटैस्तदानीम् ।
आहूयमान इव भूषणशिञ्जितैर्द्राक्
यातः स कौतुकगृहं ललितोपचारम् ॥ ६५ ।

इति श्रीश्रीवत्सचरिते महाकाव्ये चिन्ताभद्रा-
योगो नाम एकविंशः सर्गः ।

समर्चितोऽसौ विधिवत् नृपेशं
समादिशत् सूर्य्यसुतः प्रसन्नः ।
पत्नीद्वयेनानुगतं दिदृक्षे
जामातरं ते, द्रुतमाह्वयैनम् ॥ ६ ॥

इति श्रुतार्थे रविजन्मनि द्राक्
नृपाज्ञया तापसवेशधारी ।
युग्मेन पत्न्योरनुगम्यमानः
श्रीवत्सराजः सह आजगाम ॥ ७ ॥

ततः शनिः प्राह विहस्य चिन्तां
कर्त्तव्यमूढेव किमेवमस्य ।
स्थितासि वत्से ! ननु विश्वपूज्या
हरिप्रियेयं, सति ! पूजयैनाम् ॥ ८ ॥

न विश्वपूज्यत्वमपैति लक्ष्म्याः
अपूजितायाश्च मूढमत्या ।
मया, मुने ! श्रुहि कथा दिशा ते
सम्माननां स्यात् महतो दयार्द्रः ॥ ९ ॥

सुरासुराभ्यर्चितपादपद्मा
सेयं रमा, तादृश एव स त्वम् ।
विलोकयन्त्या पुनरागमं वाम्
आक्रम्यते मे हृदयं भयार्त्तम् ॥ १० ॥

आकर्ण्य चिन्तावचनं रमायाः
ततश्चितस्वातपदग्धदायाम् ।

आमन्त्र्य सभ्यान् सकलान् प्रवक्तुं
प्रचक्रमे सौरिरिति प्रसन्नः ॥ ११ ॥
प्राधान्यमस्या मम वेति दृष्टो
निष्पक्षपातो यदयं विचारे ।
अदर्शयत् कौशलमार्य्यहस्तः
तत् सर्व्वथा सुत्यमनन्यसाध्यम् ॥ १२ ॥
सम्यग् विचारेऽपि यदक्रुधं द्राक्
निरागसेऽस्मै, कदनञ्च भूरि ।
अकार्यमेतावत एव यस्मात्
एतन्निदानं* ननु तत्र सभ्याः ! ॥ १३ ॥
श्रीवत्सराजं पतिमातुकामा
भद्रावती नाम नृपात्मजेयम् ।
आराध्य भक्त्या चिरमप्रमत्ता
प्रसाधयामास हरञ्च गौरीम् ॥ १४ ॥
अस्यै प्रतिश्रुत्य तथेति कामं
मारा समाहूय च मां न्यगादीत् ।
समागमेऽस्याः कुरु वत्स ! यत्नं
श्रीवत्सराजेन नृपाङ्गजायाः ॥ १५ ॥
प्रगाढ़रागः सखि चैत्रसेन्याम्
चिन्ताह्वयायां पतिदेवतायाम् ।
दारान्तरं नैव च साधुहस्तो
यत्नोद्यतोऽलिवमवैहि वत्स ! ॥ १६ ॥

---

* एतत्—कदनञ्च ।

अंशोद्भवे द्वे अपि सिन्धुजायाः
चिन्तेयमेषा च नरेन्द्रपुत्री ।
नारायणस्यांशसमुद्भवोऽयम्
श्रीवत्सराजो गुणरत्नसिन्धुः ॥ १७ ।
लक्ष्मीनिदेशात् स्वयमेव चिन्ता
पतिव्रतेयं पतिसंगताभूत् ।
भद्रावती मा गमदन्यनाथम्
इत्यत्र विष्णोरपि यत्न आसीत् ॥ १८ ।
तस्योपदेशाच्च रमेयमस्मिन्
साहाय्यकं मे कुरुते स्म कार्य्ये ।
भद्रा निदानं ननु दुःखपाते
मूलञ्च सा तद्विनिवारणेऽपि ॥ १९ ।
विकारहेतावसति क्षितीश !*
सर्व्वेऽप्यवश्यं तत एव लोकाः ।
"विकारहेतौ सति विक्रियन्ते
येषां न चेतांसि त एव धीराः" ॥ २० ।
इति चित्तौ ते व्यसनेऽप्यलल-
प्रख्यापनायैव तथाविधं वै ।
अवेहि राजन् व्यसनोपपातं
मया कृतं विश्वपतेर्निदेशात्† ॥ २१ ।
बालस्य वीर्य्यस्य न तेऽपकर्षो
मया कृतस्तेन गणाधिपस्य ।

* क्षितीश !—हे भूपते ।    † श्रीवत्सं प्रति उक्तिरियम् ।

द्विषन्तपस्यास्य वचःसमीरैः
सन्धुचितक्रोधकृशानुराशेः ॥ २२ ।
श्रासीच्च युद्धेऽसिसहाय एव
कण्ठे गृहीतो विजयश्रिया त्वम् ।
मुष्ट्या विनिष्पिष्य च बाहुराजं
चिन्तामलक्ष्यः प्रसभं तदानीम् ॥ २३ ।

निशम्य वाक्यं रविजस्य वाणी
सविस्मयं पश्यति तन्मुखाजम्,
चिन्ताकुलायाश्च नरेन्द्रपुत्र्यां
चिन्ताह्वयायां स्तिमितेक्षणायाम् ;
किमेष सौरिर्वदतीति भीत्या
परस्परं पश्यति सभ्यलोके,
सम्भाव्य भद्रा भलमन्यथैतत्
उक्ता शनिः प्रक्रमते स्म वक्तुम् ॥ २४, २५ ।

मन्मायया मोहित एष बाहोः
कण्ठे स्वयग्राहनिपक्तबाहुम् ।
ददर्श चिन्तां परितो भ्रमन्तीं
समुद्रकूले नृपतिः कदाचित् ॥ २६ ।
दृष्ट्वा ज्वलत्कोपकृशानुरेष
मुष्ट्या विनिष्पिष्य च बाहुराजम् ।
धृतायुधैर्मल्लशतैः समन्तात्
संरक्षितां तामपि चैत्रसेनीम् ;

आच्छिद्य नीरे जलधेः पपात
मायामये नाशितदर्पकोपः,
पतंश्च लक्ष्म्या विधृतोऽङ्कमध्ये
दयार्द्रया धन्वनिक* घोरदर्शे ॥ २७, २८ ।
यस्याः श्रियः स्पर्शनिरस्तमोहः
प्रोन्मीलिताक्षः क्षितिपो ददर्श ।
स्थितं तदङ्के स्ववपुर्नं चिन्त्यां
न चाम्बुधिं विस्मयनिम्नचित्तः ॥ २९ ।
श्रुत्वा च वाचं नृपतिर्विचिन्त्यो
जीवामि हन्तेति समुच्छ्वसन् सन् ।
श्रीवत्सराजं प्रति सक्तदृष्टिः
प्राह स्म धन्योऽस्मि भवन्तमाप्तः ॥ ३० ।
इत्येवमुक्त्वा नृपतौ निवृत्ते
श्रीवत्ससामन्तर रवेस्तनूजः ।
परामृशन् पाणितलेन गात्रम्
जगाद भूयः परिसान्त्वनाय ॥ ३१ ।
नृपेष्टदेव्याः कमलापतेश्च
समाज्ञया त्वच्छुभकाम एषः ।
व्यधत्त यत्तेऽश्रमसत्तरोषः
क्षमस्व तत् त्वं नृपचक्रवर्त्तिन् ॥ ३२ ।
प्रसादतो मे तव राजधानी
विराजते शक्रपुरीव राजन् ।

* धन्वनि—मरुस्थले ।

त्वदागमं यत्र समुत्सुकः सन्
प्रतीचतेऽमात्यगणः सपौरः ॥ २३ ।
आशास्यमायोसि सुरैरपि त्वं
पतिव्रताभ्यां सहधर्मिणीभ्याम्।
चिन्तेति भद्रेति नृपालजाभ्यां
श्रिया गिरा विष्णुरिवासि यस्मात् ॥ २४ ।

तद्राजधानीं व्रज भूप ! तूर्णं
तिरोतिरस्तव्यसनोपपातः ।
अभ्याहताज्ञः सुचिरं प्रशाधि
निरस्तशत्रुं चितिमापयोधि ॥ २५ ।
इति ब्रुवन्तं तमुवाच सौरिं
श्रीवत्सराजः प्रणिपत्य भक्त्या ।
देवोप्यदोषेपि जनाय दुःखं
कुप्यन् ददात्यप्रतिकारघोरम्;
इत्येवमासीत् यदिय विघोरा
निर्भर्त्सिता मे शनिदेव ! देवे ।
अस्तं गता साद्य, मनः स्थिरं मे
प्रसीद सवर्धय विष्णुभक्तिम् ॥ २६, २७।
प्रत्यग्रनीलोत्पलनीलकान्तो
रामा मदीये नयनाभिरामा ।
तव प्रसादात् हृदये विभातु
विचित्रशक्तिर्मनु विष्णुभक्तिः ॥ २८ ।

उत्थाप्य तं सौरिरुवाच साधो
भवादृशो यन्ननु मादृशानाम् ।
विरागपात्रं क्षतदोष एव
भवेन्न, तन् साम्प्रतमिद्धबोध ! ॥ ३८ ॥

निरागसे ते यदहं तदानीं
नृपाक्रुधं तन् तव गौरवाय ।
आभाष्य चैवं नृपतिं स चिन्तां
सम्बोध्य सौरिर्वच इत्यवोचत् ॥ ४० ॥

कार्य्यानुरोधात् तनुगात्रि ! खेदम्
अखेदनीया गमितासि वत्से !
तन्मा व्यथिष्ठाः, मयि मापि कार्षीः
कोपं, चिरं तिष्ठ सुखं भगिन्या ॥ ४१ ॥

भुजङ्गमत्वं प्रतिपद्य यस्याः
ररक्षतुस्ते परिपूतमङ्गम् ।
उमामहेशौ, ननु पुत्रि ! तस्याः
किं गौरवं ते गदितुं क्षमोऽहम् ॥ ४२ ॥

ततः प्रभावोपनता स कन्या
तथाविधां तां मणिहारयष्टिम् ।
प्रत्यर्पयामास बलात् हृताञ्च
हृतां तदा प्राह च सौरिरेवम् ॥ ४३ ॥

अनेन साधारणदुर्लभेन
ग्रैवेयकेण प्रतिभिन्नशोभा

अतर्क्यरूपा कथमस्तुवाधम्
   अध्यातयाऽयं नु निवत्स्यतीति ;
इयञ्च कन्या वसुभिर्महार्घैः
   पूर्णानया ते न गतिः शुभाय ।
इत्येवमन्यच्च विचिन्त्य वत्से !
   इतं मया ते इयमेतदेव ॥ ४४, ४५ ।

प्रत्यर्पितन्यास इवास्मि सुस्थः
   वरं वपुर्भूषय भूषणैस्त्वम् ।
चिरागता गच्छतु पुण्ययोगं
   दृष्ट्वा मुदं दृष्टगणः प्रयातु ॥ ४६ ।

भद्रा ततः सा परिधाप्य भूषा
   विभूषयामास निजं शरीरम् ।
शनिस्ततो राजपरिच्छदैस्तं
   नृपं चकारोज्ज्वलवेशरम्यम् ॥ ४७ ।

विचित्रवेशं नृपतिं स वाहुः
   सदस्यवर्गैरनुमोदितस्तम् ।
सिंहासनं मङ्गलवाद्यपूर्व्वम्
   आरोपयामास सदारयुग्मम् ॥ ४८ ।

सान्निध्ययोगात् स्वयमेव लक्ष्म्याः
   विह्वललक्ष्मीकमनल्पहर्षः ।
प्रचक्रमे वक्तुमथैनमेवं
   पुरःस्थितः कण्टकिताङ्गयष्टिः ॥ ४९ ।

जामातरं त्वां ननु विष्णुरूपं
लक्ष्मीस्वरूपां तनयाञ्च भद्राम्।
अवाप्य लब्धे नहि तात! सिन्धाः
दैत्यारिवश्वोः कमलाप्रसूतेः॥ ५०॥

राज्येन सार्द्धं तनयामिमां तत्
गृहाण मां याहय तत् समयम्।
फलं तु पीयूषरसावधोरि
यत् सर्व्वथाग्राश्रमजो गृहस्थैः॥ ५१॥

धन्यो हि जामातरि वाथ पुत्रे
निधाय राज्यं खलु निर्वृतात्मा।
तपोवनं संश्रयते सदारः
संसारदावानलतापशान्त्यै॥ ५२॥

गच्छात! पैतृगा सह पीतचित्तो
गृहाश्रयं प्रेम मनेषु विभ्रत्
सुहुर्जये संक्रमयन् ज्ञयेच्छां
देहस्यमनो कारयाद्यथेऽहम्;
गलायमं शान्तिनदीषनाथ
लोष्टेषु स्वर्णेषु समानुरागः।
हम्यं यतिथे निरपायलाभा
तामथभूमिं तपसा यतात्मा॥ ५३, ५४॥

ततः प्रफुल्लोत्पलसन्निभऽसौ
चिन्ताधरे भूमिपतिर्निवेश्य।

भद्राकारं तादृशशोभमेव
  प्राह स्म तां भद्रविधानकामः ॥ ५५ ।
निक्षेप एषा तव पुत्रि ! हस्ते
  भद्रावती नाम कुलप्रतिष्ठा ।
त्वयोव यस्यामपि सिन्धुजायाः
  चंशोऽवतीर्णः शनिरित्यवोचत् ॥ ५६ ।
विजानता वो न जनेन शक्यो
  भेदो विधातुं तिसृणां कथञ्चित् ।
नेत्रे निमेषः परमेव देहे
  च्छाया विशेषप्रतिपत्तिहेतुः ॥ ५७ ।

प्राग्ज्योतिषेशो हृदयं मदीयं
  या तस्य कन्या ननु सा ममापि,
इयं मदीया भगिनोति वत्से !
  निक्षेप इत्यस्तविपक्षभावा ;
संकीर्णमार्गे भवकाननेऽस्तः
  सत्कण्टके पिच्छिलभूमिभागे,
भव प्रदीपः पदविक्रमेऽस्याः
  निरस्तनिःशेषतमोऽभिभूतिः ॥ ५८, ५९ ।

निगद्य चिन्तां गलदश्रुपूरः
  चितीश इत्थं निजगाद भद्राम् ।
भद्रे ! तवेयं भवसौख्यमूलं
  मास्यां वह त्वं प्रतिपक्षभावम् ॥ ६० ।

इत्येवमुक्ता जनकेन भद्रा
चिन्त्वा च दीना रुदती प्रणम्य ।
न विस्मरिष्याम्युपदेशमित्थ-
मुक्त्वात्मनोऽत्यागमिमं* ययाचे ॥ ६१ ॥

तस्यै प्रतिश्रुत्य तथेति कामं
वाहौ स्थिते जातगुरुप्रहर्षः ।
श्रीवत्सराजः सहसोदतिष्ठत्
सिंहासनात् नोदित एव लक्ष्म्या ॥ ६२ ॥

पश्चाच्च श्वशुरसखः पुरस्त्रियाभि
र्योग्याभिः प्रमितपराजयव्यलीकान् ।
सम्प्रीतानमृतमयैर्विनीतवाक्यै
चक्रेऽसौ गणपपुरःसरान् नृपांस्तान् ॥ ६३ ॥

यद्देव ! प्रणतिनुतिक्रियाविशेषः
संरम्भो भवति भवादृशां, तदेतत् ।
अज्ञानात् कृतमपराधनं त्वया नः
सोढव्यं पदकमलस्पृशां शिरोभिः ॥ ६४ ॥

इत्यैवं नरपतयः प्रयाणकाले
सम्राजश्चरणयुगं सरोजमुग्धम् ।
बालार्कारुणरुचिभिः किरीटरत्नैः
अभ्युद्र्यक् प्रणतिपराः समिद्धरागम् ॥ ६५ ॥

---

* इमं पितरम् आत्मनः अत्यागं ययाचे अस्मान् विहाय मा वनं यासीः इति प्रार्थयामास इत्यर्थः ।

यातेषु स्वपुरनिवृत्तयेऽभ्यनुज्ञा-
.मासाद्य क्षितिपतिषु प्रहर्षितेषु ।
श्रीवत्सं शनिरवदत् प्रसन्नमूर्त्तिः
भूयस्तं श्रवणसमुत्सुकं नृसिंहम् ॥ ६६ ।

लोके राजन् श्रद्दधानो दुरितनिरसकं कीर्त्तयेद्यस्तवैतत्
लोकातीतं विचित्रं चरितमुपसि वा कर्णयेत् कर्णपेयम् ।
दुर्भिक्षार्त्तिर्न मारीभयमपि न कदा पीड़नं तस्य सौरे
र्नैवासस्तोयतो वा नच हुतवहतोऽकालमृत्योश्च भीतिः ॥६७

जीवन्तो पुरुषायुषं सुखपरा सर्व्वेऽपि सुस्था चिरं
त्वद्राज्ये प्रकृतिभिरस्तनिखिलातङ्का नृप ! स्थास्यति ।
पर्जन्यः समये प्रवर्षति पुरा शस्यानुकूलं जलं
नित्यं भूमिरुपस्नुता तव गुणै रत्नानि दुग्धे स्वयम् ॥ ६८ ।

लक्ष्मीस्तं निजगाद सौरिवचने याते समाप्तिं ततो
यत् वेद्यं भवता तदेव विदितं तीर्णश्च शास्त्राम्बुधिः ।
तस्मात् नास्त्युपदेश्यमल्पमपि ते श्रीवत्स ! वत्साधुना
माताऽस्मीति तथापि वच्मि यदहं किञ्चित् तदाकर्ण्यताम्॥६

इदं जनानां श्रुतिमूलगामिनी
सुदर्शनाप्यापि तिरोदधत् भृशम् ।
अमानुभेद्यं नवयौवनोद्भवं
विमोहनं यत् तिमिरं विजृम्भते* ॥ ७० ।

* यत् यस्मात् श्रुतिमूलगामिनी आकर्णविश्रान्ता पक्षे इदमपदं सुदर्श शोभनदर्शना इदम् दर्शनं जनानां इदं इति मर्म तिरोदधत् आच्छादयत् अमानुभे [illegible] विमोहन मोहजनकं नवयौवनोद्भवं तिमिरं अन्धकार मोहरूप [illegible] विजृम्भते प्रकाशते तदा [illegible] ।

अमन्दगम्यो विषयोपभोगजो
विषप्रमोहो बलवान् दुरत्ययः ।
प्रजायते रुद्धविवेकवैभवो
महीयसां तत्त्वविदामपीति यत्* ॥ ७१ ।

न दर्पदाहः शिशिरोपचारतः
प्रशस्यते तात ! विशुद्धसम्भवः ।
अहंकृतिव्याधिरवैद्यसाध्यतां
प्रयाति यत्† तत्‡ बहुधाभिधीयते ॥ ७२ ।

राज्येऽभिषिक्तं नृपतिं तु यद्वा
यद्वानपत्रेण निषेवते च
तेनाहृता द्राक् परलोकदृष्टि-
र्दृष्टेव सञ्जायत एव मन्ये ;
कृताभिषेको न नृपस्तदेनसो
बिभेति घोरात् नरकात् न मोषणात् ।
जनापवादाच्च न वा शृणोत्यसौ
गुरूपदेशं न च मित्रभाषितम् ॥ ७३, ७४ ।

संहृत्ते पुरुषे जरत्यतितरां, साध्यः क्रियाभ्यः क्रमात्
व्याहत्ते करणेऽखिले च न पुनर्भोगस्पृहा शाम्यति ।
सर्वाङ्गे शिथिलेऽप्यहो न भजते शैथिल्यमत्यल्पकम्
नृणां संसृतिबन्धनं, दृढतरं जायेत तत् प्रत्युत ॥ ७५ ।

दोषाहिर्वसतो दरो सुविपुला स्वर्भानुजिह्वा च सा
यागे धर्मविधौ-ऽग्नी मगनदो क्रोधाग्न्यनकस्य च । •

---

* मु—यत्कात् ।    † मु—यत्कात् ।    ‡ मु—तत्कात् ।

घोरा येन भवन्तमन्यजनवत् भोगस्पृहा राक्षसो
सर्व्वग्रासमियं ग्रसेन्न, सततं रक्ष्यस्तथात्मा त्वया ॥ ७६ ।

मोहध्वान्ततिरोहितेक्षणयुगं जाने नवं यौवनं
राज्यश्चापरवञ्चनेन न विना संरक्ष्यते सर्व्वथा ।
तत् त्वं वत्स ! तथा यतस्व हि यथा नो निन्द्यसे साधुभिः
लोकैर्नो परिहस्यसे, न सखिभिः कामं तथा शोच्यसे ॥७७॥

नोन्मत्तीक्रियसे मदेन, विषयैर्नाकृष्यसे, वञ्च्यसे
धूर्त्तैर्नो, न विडम्ब्यसे विटजनैर्लक्ष्म्या न वा नर्त्यसे ।
रागैर्नो ह्रियसे, नचापि भुजगैः सन्दश्यसे, लोभ्यसे
लोभिर्नो, शृणु धारयैतदखिलं गीतं वचः पण्डितैः ॥७८॥

श्रीवत्स। गोविन्दपदारविन्द-
निष्यन्दसन्दोहविमुग्धभृङ्ग !
सेवस्व विप्रान् दृढभक्तिरेवम्
अवाप्स्यसि त्वं चरमे रमेयम् ॥ ७९ ।

यं चिन्तयस्यविरतं हृदये निधाय
गोविन्दमच्युतिमयं स हि विप्रजातेः ।
सन्धारयन्नुरसि पादसरोरुहाङ्कं
श्रीवत्स ! गौरवमवर्द्धयदेव लोके ॥ ८० ।

यो राजवर्चसमपास्य गतो द्विजत्वं
तं कौशिकं मुनिवरं परिपृच्छ गत्वा ।
युद्धे वशिष्ठमुनिना सह तस्य राज्ञः
कां ब्रह्मवर्चसमहो क्षतवत् न हानिम् ॥ ८१ ।

किं वारिभिः सततधारपतद्भिरम्भात्
विप्रस्य रोषहुतभुक् यदि क्षुभितः स्यात् ।
सर्व्वात्मना ननु यतस्व निवारणार्थम्
वंशप्रदाहमवधारितमेव विद्धि ॥ ८२ ।

यो क्षुभयत्यखिलदाहपटुं द्विजाग्निम्
सोऽगाधमर्णवजलं विशतु प्रकामम् ।
गच्छत्वसौ हिममयेप्यथवेन्दुलोके
तस्य प्रदाहमवधारितमेव विद्धि ॥ ८३ ।

विप्रो यद्यपि पूजितः किमु तदा स्वाराधितैर्दैवतैः
भक्तिर्यद्यपि भूसुरे किमु तदा भक्त्या हरौ गाढ़या ।
यस्मै क्रुध्यति विप्रजातिरवनौ श्रीवत्स ! गोविन्दतः
तत्त्राणं न हि, चिन्तयेति ननु तत् तां सर्व्वथा तोषय ॥८।

इत्युक्त्वा मुनिना प्रदर्शितपथा कक्षाद्विनिष्टा क्रमात्
श्रीवत्सेन सबाहुकेन रुदता तादृग्दशापन्नया ।
आश्लिष्टा सहभद्रया दृढ़तरं देव्या च चिन्ताख्यया
सा लक्ष्मीरधिरुह्य पुष्पकरथं वैकुण्ठलोकं गता ॥ ८५ ।

श्रीवत्सः सहधर्म्मिणीद्वयमितो हृष्टान्तरामानयत्
तिष्ठन् सौतिपुरे महेन महता कालं कियन्तं ततः ।
चिन्तायाः पितुरालये च कियतो घस्रान् मुदा यापयन्
यातः काष्ठिकसद्म, यत्र वसति स्माज्ञातवासं पुरा ॥ ८६ ।

पश्यन्तो रमणीयुतं मुमुदिरे तं काष्ठिकास्तत्क्षणे
ऽनाहृत्या परिपीड़िता इवं जना मेघं तडिद्गुणगतम् ।

सश्लोकः स हि भूपतिः परिक्लमानाश्वास्य तान् सर्व्वथा
सम्पत्त्यातुलया निनाय समुहत् सामाजिकं गौरवम् ॥८७।

पश्चात् स्वां राजधानीं अनिवरजनितोत्कर्षलक्ष्मीप्रकर्षां
चिन्ताभङ्गासमेतः पुरजननिवहैर्हर्षसफुल्लनेत्रैः।
प्रत्युद्यातः समन्तात् रसति च पटहे वैजयन्तीसनाथां
प्राविशत् मन्त्रिवर्गैः पुलकिततनुभिर्दर्शिताध्वा पुरोगैः॥८८।

कस्त्वं ? नागरिकः, कुतः पुनरिह ? श्रीवत्सराज्यात् सखे !
किं तत्रास्ति जगद्विलक्षणमहो ? निष्कण्टकं वाणिजम्।
नित्यं वीतभयो विधुर्विधुरियोः पूर्णः सदा राजते ;
कीदृक् तस्करता ? श्रुतौ परमियम्, श्रुत्वाहसत् तस्करः॥८९

कासारो* वसुना† निजेन दृपितान् पान्थानिवाप्यायत
श्रीवत्सः, स इव प्रशस्ततरैस्तीर्थैः‡ समालङ्कृतः।
भेदस्त्वेष तदोभयोः समभवत् हंसो बकः सञ्चरन्
स्वं रूपं भजते ह्यमुत्र, नृपतौ तौ द्वौ गतौ हंसताम् ॥९०।

इति श्रीश्रीवत्सचरिते महाकाव्ये प्रसन्नशनैश्चरो
नाम द्वाविंशः सर्गः।

समाप्तोयं ग्रन्थः।



* कासार—सरोवर। † वसुना—धनेन रश्मिना च। ‡ तीर्थं—सोपाने धर्माध्वादिषु च।

